THE

# KASHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO. 112.

( Nyaya Section, No. 17. )



॥ श्री ॥

सामान्यनिरुक्तिगादाधरी—

# गूढार्थतत्त्वालोकः।



प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी।

काशीस्थराजकीयसंस्कृत पाठशालीयन्याय-
शास्त्र प्रधानाध्यापकेन न्यायाचार्य पं०
श्रीशिवदत्तमिश्रगौडेन विरचितया
टीकया टिप्पण्या च सहिताः
न्यायशास्त्रग्रन्थाः—

१ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च, श्रीमथुरानाथतर्कवागीशकृतम्। गङ्गानिर्झरिणीव्याख्यया टिप्पण्यादिभिश्च विभूषितं।
मूल्यम् रु० ०—१२

२ जागदीशीपञ्चलक्षणी सिंहव्याघ्रलक्षणसहिता, श्रीजगदीशतर्कालङ्कारकृता। गङ्गानिर्झरिणीव्याख्यया टिप्पण्यादिभिश्च विभूषिता च।
मूल्यम् रु० ०—८

३ जागदीशीव्यधिकरणम्, श्रीजगदीशतर्कालङ्कारकृत सटिप्पणगङ्गाख्यव्याख्यासहितम्।
मूल्यम् रु० २—८

४ अवच्छेदकत्वनिरुक्तिः, श्रीजगदीशतर्कालङ्कारकृता, गङ्गाख्यव्याख्याटिप्पणीसहिता।
मूल्यम् रु० १—४

५ सिद्धान्तलक्षणम्, श्रीजगदीशतर्कालङ्कारकृतम्, गङ्गाख्यव्याख्याटिप्पणीसहितम्। मू० रु० १—८

६ पक्षता। ,, ,, गङ्गाख्यव्याख्याटिप्पणीसहिता।
मूल्यम् रु० १—८

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी।

श्रीयुत [illegible]जी

THE

# KASHI SANSKRIT SERIES.

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

112

( Nyāya Section No. 17 )

# Gūdhārthatattvāloka

A COMMENTARY

*On*

# SĀMĀNYANIRUKTI GĀDĀDHARI

*By*


SARVATANTRA SWATANTRA

MITHILĀ MANDAL MANDAN PANDIT KULPATI

*Sri Dharmadatta ( Baohha Jha ) S'armā*

*Edited by*

*Pandit Sri Lakshminatha Jhā*

Professor, Benares Hindu University

and

Nyāyāchārya

*Pandit S'ri Jagadis'a S'armā.*



PUBLISHED & SOLD BY

JAI KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

*Vidya Vilas Press*

Benares city.

1935.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिजपुस्तकमालायाः—
११२
न्यायविभागे (१७) सप्तदशपुष्पम् ।

* श्रीः *

# सामान्यनिरुक्तिगादाधरी—
# गूढार्थतत्त्वालोकः ।

सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डन-
पं० कुलपति झोपाख्य श्रीधर्मदत्त-
[ श्री बच्चा झा ] शर्मविरचितः ।

ग्रन्थकर्त्तुः शिष्येण—
हिन्दूविश्वविद्यालयीय न्यायवेदान्ताध्यापक—
पण्डित श्रीलक्ष्मीनाथ झा शर्मणा
ग्रन्थकर्त्तुस्तनुजन्मना—
न्यायाद्यनेकशास्त्राध्यापकश्रीजगदीश शर्मणा
च संशोधितः ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९२

-हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिजपुस्तकमालायाः—
११२
न्यायविभागे (१७) सप्तदशपुष्पम् ।

* श्रीः *

# सामान्यनिरुक्तिगादाधरी-
# गूढार्थतत्त्वालोकः ।

सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डन-
पं० कुलपति झोपाख्य श्रीधर्मदत्त-
[ श्री बच्चा झा ] शर्मविरचितः ।

ग्रन्थकर्त्तुःशिष्येण—
हिन्दूविश्वविद्यालयीय न्यायवेदान्ताध्यापक—
पण्डित श्रीलक्ष्मीनाथ झा शर्मणा
ग्रन्थकर्त्तुस्तनुजन्मना—
न्यायाद्यनेकशास्त्राध्यापकश्रीजगदीश शर्मणा
च संशोधितः ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९२

# भूमिका ।



यः स्मृतः शरणार्थिभ्यः कल्पद्रुम इवेष्टदः
राधालिङ्गितवामार्धः सकृष्णः शरणं हि नः

अहो विदितमेव समेषां विषयविषमेषुखिन्नमनसां, यत्सर्वेऽपि निसर्गत एव दुःखं जिहासवः सुखाभिलाषुकाश्च प्राणिनः । प्राणिमात्रस्य, तादृशेच्छाया औत्सर्गिकत्वात्, तदुपायमधिजिगमिषन्त आत्मतत्त्वावबोधमेव सर्वानुमतं, श्रुतिसम्मतं मतमवगच्छन्ति । सचानात्मभ्यो भेदेनात्मावगतिरेव, सा चानात्माज्ञानेऽशक्यैवेति, तदुपायतयैवानात्मप्रमाणविषयविचारग्रहिलानामेषामनात्मप्रमाणाङ्ग—विचारसमारम्भः । वादिविजयादिकन्तु आनुषङ्गिकमेवास्यफलमिति मोक्षदर्शनाङ्गभूतमेव हेत्वाभाससामान्यलक्षणविवेचनम् । अस्य दर्शनस्य मोक्षोपयोगिता श्रुत्यापिसमर्थिता, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यभिदधत्या । तरतिशोकमात्म वित्, शोकेनात्यन्तं विमुक्तश्चरति इत्यादि श्रुतिशतेनैकविशशतिदुःखात्यन्तविमुक्तेः पुमर्थतोच्चैरुट्टङ्किता च । एवं विधे, मोक्षे विवेकिनो विरक्तस्यैवाधिकारस्तदुक्तं मणिकारेण ईश्वरानुमाने,—तस्माद्विवेकिनः सुखमात्रलिप्सवो वहुतरदुःखानुविद्धमपि सुखमुद्दिश्य शिरोमदीयं यदि याति यातु इतिकृत्वा परदारादिषु प्रवर्तमाना, वरं वृन्दावने रम्ये इत्यादि वदन्तो नात्राधिकारिणः । ये च, विवेकिनोऽस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि, कियती वा सुखखद्योतिकेति कुपितफणिफणच्छायोपमं संसारसुखं मन्यमानाः सुखमपि हातुमिच्छन्ति तेत्राधिकारिण इति—। अतः भोगार्थिनामनुपादेयत्वेऽपि आत्यन्तिकदुःखनिवृत्तेः पुरुषार्थता न हीयते । न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः, परीक्ष्यलोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायात् नास्त्यकृतः कृतेन, दुःखेनात्यन्तं विमुक्तश्चाति, तरति शोकमात्मवित्, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्यादिश्रुतिशतसमर्थितश्चायमर्थ इत्युपरम्यते ।

तस्यैतस्य ग्रन्थरत्नस्य सर्वातिशायिस्पृहणीयविचाररत्नाकरस्य ये जनकगुणगौरवेण जननीलोकोत्तरमाहात्म्येन च सर्वानतिशयानस्य अन्यैर्दुरापां भूमिकां नीतस्य विवेचनसार्वभौमस्य गुणगणवर्णने के वयम् । अस्मिंश्च विवेचने तत्र तत्र ते तेऽपूर्वा अंशा निबद्धा येषां निबन्धनम् न कैश्चित्प्राच्यैरुदीच्यैरपि विद्वद्धौरेयैर्मनसापि चिन्ततम् । अत्र तत्र तत्र पूर्वैरनुद्धृता अपि अंशा शङ्काकलङ्ककवलीकृता उद्धृता इति विदितमेव तर्ककर्कशविचारचातुरीचमत्कृतचेतसाम् । एतन्निबन्द्धृभिर्वादमहोत्सवेषु स्वकालीनाः प्राच्या प्रतीच्याश्च विद्वत्सार्वभौमाः तेषु तेषु समयेषु तुलिता इति विदितमेवागोपालाङ्गनमाचविद्वदङ्गनमिति नैष विषयः प्रतन्यते ।

तदस्य निर्माता मैथिलान्वयक्षीरोदधिसम्भूतः विद्वद्भुवनविसारियशोमहाः कल्पनाकामिनीकमनीयकान्तः कविताकलाकुलभूमिः तार्किककुलकमलिनीकमलिनीनाथः कलाकुमुदिनीकलाकर इव पूर्वोत्तरमीमांसाकान्तारविहारकमनीयकेशरी वाग्देवीपरमाश्रयः श्री १०८ धर्मदत्तझापरपर्य्यायः प्रसिद्धश्रीबच्चझानामधेयः शङ्करावतार इव विभूतिधवलः अद्वैतनिष्ठस्तत्प्रतिष्ठश्च, गोष्यतिमपि यं बुधा अवनिगीष्पतिमभिमन्वते । इमे च कवितार्किकसार्वभौममौलिमणयः अतीवसद्हृदयाः अतीवोदारचित्ताः सुतनिर्विशेषं शिष्येषु आत्मनिर्विशेषं बन्धुषु किंबहुना आकीटपतङ्गं दययाऽनुकम्पमानाः मैत्रो ब्राह्मण उच्यते इतिस्मृतिं सत्यापयन्तः सर्वेषां हृदयाण्यधिवसन्तो मिथिलामुद्योतितवन्तः । एषाञ्च जन्म १९१७ तमे वैक्रमे सम्वत्सरे चैत्रेशुक्लनवम्याम् इति । एषां च पितामहाः श्रीमहामहोपाध्यायरत्नपाणिझा शर्माणः श्रीदरभङ्गाधिपतेः श्रीरुद्रसिंहमहाराजस्य द्वारपण्डिता महर्षय इव अनेकस्मृतिनिबन्धनिबन्धारः आसन् । तत्कृतनिबन्धाश्च—आचारसंग्रहः पार्वणचन्द्रिका—प्रायश्चित्तपारिजातः कृत्यसागरः रामचन्द्रप्रतिष्ठासुबोधिनी मिथिलाह्निकम्—मिथिलेशचरितम्—कृष्णार्चनचन्द्रिका त्रयमासादिविचारः नाडीविचारः महादानवाक्यावली एकोदिष्टसारिणी इति । एतेषु पञ्चषा मुद्रिताः सन्ति । एते सर्वतन्त्रस्वतन्त्रा अपि धर्मनिबन्धानेव निबबन्धुः धर्मरुचित्वादिति विदितमेव विदुषाम् । एषां पुत्राः श्रीदगुरूणां पितरः श्री६दुर्गादत्तझाशर्माणः गौतमप्रतिमाः तपस्विनश्च परःसहस्त्रैः शिष्यैःसमुपासिताः अल्पायुषः सञ्जाता इति नैतैर्निबन्धो निब-

द्धः । एतेषां तनयरत्नभूताः जगद्गुरवः श्रीधर्मदत्तोपाध्यायापरपर्य्यायाः प्रसिद्ध श्री६वच्चाझाशर्माणःएतैर्लक्षाधिकश्लोकसङ्ख्यातानि निबद्धानि ग्रन्थरत्नानि । तानि च व्याप्तिपञ्चकविवेचनम् १ सिद्धान्तलक्षणविवेचनम् २ अवच्छेदकत्वनिरुक्तिविवेचनम् ३ । व्याप्त्यनुगमविवेचनम् ४–व्युत्पत्तिवादगूढार्थतत्त्वालोकः ५ शक्तिवादटिप्पणम् ६ सामान्यनिरुक्तिगूढार्थतत्त्वालोकः ७ पक्षताटिप्पणम् ८ सव्यभिचारटिप्पणम् ९ सत्प्रतिपक्षटिप्पणम् १० अवयव टिप्पणम ११ । खण्डनखाद्यटिप्पणम्–१२ ईश्वरमहाविद्यानुमानविवेचनम् १३ कुसुमाञ्जलिवर्धमानटिप्पणम् १४ न्यायभाष्यटीका–१५ न्यायवार्तिकतात्पर्य्यटीका-१६ गीतामधुसूदनीगूढार्थतत्त्वालोकः १७ कुण्डमण्डपसिद्धिटीका १८ अद्वैतसिद्धिचन्द्रिका टिप्पणं १९ सुलोचनामाधवं चम्पू काव्यं २० च । इष्टापूर्तेषु च सचतुश्चरणयज्ञपुष्करिणीनिर्मितिः शिवालयनिर्मितिःतत्प्रतिष्ठा अनेकारामनिर्मितिश्च । एतन्निर्मितेषु ग्रन्थेषु व्युत्पत्तिवादव्याप्तिपञ्चकावच्छेदकत्वनिरुक्तिसामान्यनिरुक्तिमधुसूदनीगूढार्थतत्त्वावलोका मुद्रिता एव, खण्डनटिप्पणञ्च आरब्धमुद्रणम् । एते गुरवः आजीवनम् स्वगृहबहिर्वेदिकायामेव परोविंशतिंछात्रान् अन्नवस्त्राद्युपकरणैः सुतनिर्विशेषं पालयन्तः अध्यापयन्ति स्म । अपरे च नानादिग्देशेभ्यः समागत्य यतयो विशिष्टमतयो द्विजातयश्च साकमध्ययनायवसन्तोऽधिगच्छन्तः शास्त्राणि काशिकादिमहाविद्यापीठं स्मारयन्तः गृहीतक्षेत्रन्यासा इव येषां गृहाण्यध्यवात्सुःइदानीमेतेषां श्री६गुरूणां शिष्यैःप्रशिष्यैस्तच्छिष्यैः परः सहस्रैर्व्याप्तमिदं भुवनतलमिति विदितमेव समेषां न किञ्चिदत्र वक्तव्यम् । श्रीगुरुः आजीवनम् अर्थिसमविभागं स्वीयं भुञ्जानो लोकोत्तरतां स्वचरिततर्ति नयन् पुरुषोत्तम इव ब्राह्म्या श्रिया पूर्णः सरस्वत्या च सदाश्रितः स्वात्मप्रतिष्ठः कदाचिदपि वैकल्यं नान्वभूत । श्री६गुरोः द्वौ तनयौ तयोर्ज्येष्ठः गुणज्येष्ठः श्रीप०जगदीशझाशर्मा अस्माकं सतीर्थ्यः अतीवसुशीलः सुविनीतः सर्वेषु दर्शनेषु निष्णातः श्री६गुरूणां स्मृतिं इदानीतनानां चेतस्सु संदधानः श्री६गुरुपीठमेवालङ्करोति इत्यस्माकं परं प्रमोदस्थानम् इतिसंक्षिप्तः गुरुकुलपरिचयः ॥

एष च निबन्धः वाराणस्यां चौखम्बाकाशीसंस्कृतग्रन्थमालायां श्रेष्ठिहरिदासगुप्तात्मजजयकृष्णदासगुप्तमहाशयेन स्वीये विद्याविलास-

नाम्नि-यन्त्रालये संमुद्रय प्रकाशितः अस्य च संस्कर्ता श्रीद्गुरुणां प्रियशिष्यः श्रीप०लक्ष्मीनाथझाशर्मा काशिकहिन्दूविश्वविद्यालये न्यायवेदान्ताध्यापकः षड्दर्शनीसमाश्रयः अनेकनिबन्धानां निबद्धा । अतएव सम्भावये चास्य संस्करणं चेतोहरणं विदुषामुपकरणमेवेति । प्रार्थये च नव्यन्यायविवेचनचणान् न्यायरसिकान् यदेतद्विवेचनं संगृह्य श्रीद्गुरुणां कल्पनाकलाकलितमपरिमेयवैदुष्यवैभवमनुशीलयन्तः नयन्तश्च स्वकल्पनाः प्रौढिप्रकर्षम् अनुभवन्तु तर्ककर्कशविचारजितवादिव्रजविजयानन्दम् ॥

* इति *

श्रीद्गुरुवरवच्चाझाचरणसेवाशिवसङ्कल्पः--

काशीस्थगोयनकासंस्कृतमहाविद्यालये धर्मदर्शनाध्यापको-

हरिनाथ शास्त्री—

दर्शनाचार्य्यः ।

श्रीगणेशायनमः ॥

# सामान्यनिरुक्तिविवेचना प्रारभ्यते ।



व्याजस्वीकृतसेवया विधुरभूदग्रेसरः श्रीमतां
मानव्याहतिकैतवावनमनादीशास्त्रिलोकीपतिः ।
सम्भिन्नाब्जकुलप्रसूति विभवादम्भोजमञ्जालयो
यस्य श्रीगिरिजापदाम्बुजयुगं तत्स्यादभीष्टप्रदम् ॥ १ ॥
हेत्वाभासीय सामान्यलक्षणालम्बिनी मुदा ।
गदाधरकृतव्याख्या धर्मदत्तेन वर्ण्यते ॥ २ ॥

अथ दोषेतरभेदानुमापकप्रकृतलक्षणात्मकहेतोर्व्यर्थविशेषणघटितत्वे व्याप्यत्वासिद्धिरूपदोषस्यालक्षणताप्रयोजकस्य समुदयोभवेदिति लिङ्गांशनिवेशस्य व्यर्थत्वमेवोद्भावयितुं युज्यते, नत्वुज्यतेऽसम्भवात् नच स्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणे तत्सम्भव इत्याशङ्क्यम् तस्यातिव्याप्तिदोषेणालक्षणत्वात्, ज्ञानांशस्यापि व्यर्थत्वापत्त्या तत्परित्यागस्याप्युचिततत्वप्रसङ्गाच्च । नच कामिनीज्ञानान्यज्ञानत्वावच्छिन्नम्प्रति कामिनीजिज्ञासात्वेन तल्लिङ्गकानुमितौ तदन्यलिङ्गकानुमित्सात्वेन च प्रतिबन्धकत्वेन च कामिनीज्ञानानुमित्यादावतिप्रसङ्गइति तद्वारणाय ज्ञानपदसार्थक्यमितिवाच्यं तत्प्रतिबध्यतायाः कामिनीविषयकतादृशानुमितौ तदन्यलिङ्गकानुमितौ चासत्त्वेनानुमितित्वाव्यापकत्वात् समानविषयकानुमितित्वावच्छिन्नं प्रति समानविषयकप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकताया विशेषणविषयकत्वावच्छिन्नतया विशेषणेऽतिव्याप्तेरप्येकदेशातिव्याप्तिविलक्षणत्वेन वार्य्यतायास्तुल्यतया ज्ञानपदोपादानेपि तस्या वारणस्याशक्यत्वेनैदृशातिव्याप्तेरनुद्भावनीयत्वाच्च विषयित्वसामान्यनिष्ठस्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणस्य कथञ्चित्क्षोदक्षमत्वेपि लिङ्गविषयज्ञानीययद्विषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य यद्विषयि-

तावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावतो भेदेन व्यर्थत्वासम्भावात्। नच समानाकारकज्ञानीयविषयत्वयोरैक्यपक्षे लिङ्गविषयकसमूहालम्बनज्ञानमादाय लिङ्गविषयकज्ञानीयत्वस्य यद्विषयित्वसामान्य एव सत्त्वेन द्वितीयाभावस्यापि तत्र सत्तया न तयोर्भेदइतिवाच्यं तथासति लिङ्गघटितोक्तावच्छेदकत्वत्वस्य लघुभवदतिप्रसङ्गाद्यनापादकलघुधर्म्मान्तरकतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावस्याप्रसिद्ध्या तद्घटितलक्षणरूपहेतोरप्यप्रसिद्धतथाकस्य व्यर्थविशेषणघटितत्वमुद्भावनीयं स्यात्। वस्तुतो ऽनतिरिक्तवृत्तित्वस्य स्वव्यापकतत्कत्वरूपस्यैव लक्षणे प्रविष्टतया तत्र वैयर्थ्यशङ्काया एवानुन्मेषात् यद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावात् लिङ्गविषयकत्वावृत्तेः तद्वृत्तिलिङ्गविषयकयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य भेदादित्याशयेनाह

लिङ्गांशनिवेशस्यनिष्प्रयोजनकतयेति, अनतिप्रयोजनकतयेत्यर्थः उत्कटेच्छानधीनेच्छाविषयत्वमनतिप्रयोजनकत्वं तच्च तद्विशेषणे स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धस्य दुष्टलक्षणघटकस्य सूचनेनापाततः फलवत्तया दोषलक्षणघटकेपीच्छाविषयत्वमिति वर्त्तते औत्कट्यं जातिविशेषः विषयिताविशेषो वा, निः प्रयोजनत्वञ्च न फलाभावानिबन्धनेच्छानधीनेच्छाविषयत्वं निष्फले फलानात्मके चेच्छाविषयत्वस्यैवासम्भवात् किन्तु फलाभावनिबन्धनेच्छाविषयत्वाभाव एवेति बोध्यम्॥

अथ लिङ्गाज्ज्ञानं लिङ्गज्ञानमितिविग्रहाश्रयणेन लिङ्गाज्जानितं यज्ज्ञानमितिविग्रहाश्रयणेन वा लिङ्गजन्यत्वस्य लिङ्गविषयकज्ञाननिष्ठाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताकजन्यत्वरूपस्य लाभेनानुमितित्वस्य लाभाद् यद्विषयकानुमितित्वव्यापकत्वघटितलक्षणलाभ इति संशयाहार्य्यज्ञानमादायासम्भववारणस्यैव लिङ्गांशनिवेशनप्रयोजनत्वेन न निष्प्रयोजनत्वसम्भवइति॥

यत्तु वह्निरवृत्तिरित्यत्र वह्निमद्रूपबाधेऽव्याप्तिः वह्निमत्त्वावच्छिन्नविषयकज्ञानस्य निर्धर्म्मितावच्छेदककस्यानुमितित्वविरहात् पर्व्वतत्वादिधर्मितावच्छेदककज्ञाने च वह्निमत्त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य विवक्षणीयस्य विरहात् । नच वह्न्यसंयुक्तवह्निधर्म्मिके वह्निमान्वह्निरिति ज्ञाने ऽनुमिताव्यापकविषयताया अभावा-

ऽव्याप्तिसम्भव इति वाच्यं प्रमेयत्वमवृत्तीत्यत्र प्रमेयरूपबाधे स्वरूपेण प्रमेयमवृत्तीत्यत्र प्रमेयवद्रूपबाधेचाव्याप्तेरनुद्धारात् तद्दोषविषयका-व्यापकविषयताशून्यानुमित्यप्रसिद्धेरिति । नच तादृशस्थले सर्व्वै-रेव प्रमेयवदादिविशेष्यकस्वरूपतः किञ्चित्प्रकारकभ्रमानुमितेरेव तादृशत्वान्नाव्याप्तिरितिवाच्यं, यादृशवस्तुपक्षकावृत्तित्वसाध्यकस्थले तादृशवस्तुमद्रूपबाधविषयकज्ञानं न भ्रमस्तत्राव्याप्तेर्दुरुद्धरत्वात् ॥

यत्तु किञ्चिद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयत्वा-व्यापकविषयिताशून्यत्वन्निवेशनीयं वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाव-च्छिन्नत्वान्यतरसम्बन्धेन बोध्यम् । यद्वा किञ्चिद्रूपावच्छिन्नविषयत्वा-व्यापकविषयताशून्यत्वं विवक्षणीयम् तत्र तादृशाभावश्च न वस्तु-त्वसमानाधिकरणावच्छेदकताकविषयताकत्वसमानाधिकरणभेदप्रति-योगितानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठा-वच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपाव-च्छिन्ननिरूपितविषयित्वन्नास्तीतिप्रतीतिसिद्धो वस्तुत्वसामानाधि-करण्यनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नाव-च्छेदकत्वानिरूपितावच्छेदकतया परम्परानिरूपितप्रतियोगिताकोऽस-म्भवात् रूपमात्रस्यैवावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वात् । किन्तु वस्तुत्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकता-भिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छे-दकतया परम्परानिरूपितप्रतियोगिताकः तथाच वह्निरवृत्तिरित्या-दौ वह्निमान्पर्वत इत्यादिदोषविषयकानुमितेर्वह्निमत्पर्वतत्वादिनिष्ठा-वच्छेदकताकविषयताकत्वसमानाधिकरणभेदप्रतियोगितानिरूपित-परम्परावच्छेदकतावद्रूपावच्छिन्नविषयित्वाभाववत्त्वान्नाव्याप्तिरिति तत्तुच्छम् उक्ताभाववदनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वन्ना-स्तीतिप्रतीतिसिद्धाभावस्य लक्षणघटकत्वे प्रतिबन्धकतायान्तस्या-सम्भवेन लक्षणासम्भवापत्तेः जातिमान्वह्न्यभाववानित्यनुमिते-रपि वह्न्यभाववज्जातिमत्त्वनिष्ठावच्छेदकत्वघटिताभाववत्वादिति तादृशाभावव्यक्तिमदनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्ती-तिप्रतीतिसिद्धाभावः तादृशाभाववृत्त्युभयावृत्तित्वसमानाधिकरण-निरवच्छिन्नावच्छेदकतानिरूपितावच्छेदकतानिरूपितानुमितिनिष्ठाव-च्छेदकतया परम्परानिरूपितप्रतियोगिताकाभावत्वेनानुगतेन

लक्षणे निवेश्याः तथाच वह्न्यभाववद्वृत्तित्वनिष्ठावच्छेदकताकविषयताकत्वसमानाधिकरणभेदघटिताभावव्यक्तिमदनुमितिवृत्तिभेद प्रतियोगितावच्छेदकत्वाभावस्य प्रतिबन्धकतायां सत्वेन लक्षणसमन्वय इव पर्वतोवह्न्यभाववानित्यत्र वह्निमत्पर्वतत्वनिष्ठावच्छेदकताकविषयताकत्वसमानाधिकरणभेदघटिताभावव्यक्तिमत्वह्नित्वावच्छिन्नविषयताकानुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य बाधप्रतिबन्धकतायां सत्वेन वह्नित्वावच्छिन्ने बाधैकदेशेऽतिव्याप्तिरपि स्यात् सिद्धान्ते चानुमितित्वाप्रवेशेन वह्निरित्याकारके तादृशाभावव्यक्तिमान्निश्चये प्रतिबन्धकत्वासत्वेन नातिव्याप्तिः ॥ नच वह्निविशेष्यकसमवायेन स्वरूपतः पर्वतत्वादिप्रकारकानुमितेस्तादृशत्वान्नात्रापि पक्षे दोष इतिवाच्यं यादृशवस्तुप्रकारकं यादृशवस्तुविशेष्यकञ्च ज्ञानं भ्रमस्तादृशवस्त्वभावसाध्यकपर्वतादिपक्षकस्थले तादृशवस्तुमत्पर्वतरूपबाधैकदेशे तादृशवस्तुन्यतिव्याप्तेर्दुरुद्धरत्वादिति किञ्चिद्रूपावच्छिन्नाविषयत्वाव्यापकविषयताशून्यत्वानिवेशेऽतिव्याप्तिः यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिवेशे प्रमेयमवृत्तीत्यादावव्याप्तिरित्युभयतः पाशारज्जुरिति हेयँल्लिङ्गाज्ज्ञानमितिविग्रहेण व्याख्यानम् ॥

अथेयस्वाचोयुक्तिरयुक्ता जगदीशव्याख्यायां तन्मतेऽव्यापकविषयताशून्यत्वस्य लक्षणघटकत्वाभावात् तथाच दीधित्युक्तलिङ्गांशनिवेशाविवक्षितत्वे तद्व्याख्यायाङ्कथन्ताया अनिवृत्तिरिति ॥ यत्तु महानसपक्षकमहानसीयवह्न्यभावसाध्यकमहानसीयवह्नीतरवह्न्यभाववन्महानसकालीनधूमहेतुकस्थले वह्निमन्महानसेऽतिव्याप्तिः प्रकृतलिङ्गज्ञानजन्यवह्निमन्महानसविषयकानुमितेर्महानसीयवह्नित्वावच्छिन्नप्रकारकत्वेन प्रकृतानुमिति प्रतिबन्धकत्वात्।गदाधरमते तु वह्न्यभावसाध्यके प्रागुक्तपक्षहेतुके वह्निमन्महानसेऽव्याप्तिरेव प्रकृतलिङ्गज्ञानजन्यदोषविषयकानुमितेर्महानसीयत्वावच्छिन्नविषयकत्वेनाव्यापकविषयताशून्यत्वविरहात्। नच लिङ्गांशे प्रकृतत्वनिवेशे प्रयोजनविरहेण नोक्तदोषयोरसम्भवइतिवाच्यं महानसीयवह्नीतरवह्न्यभाववन्महानसपक्षके प्रागुक्तदोषयोरसम्भवात् वह्निमत्तादृशमहानसविषयकानुमितेर्महानसीयवह्नित्वावच्छिन्नप्रकारकत्वादिति तत्तुच्छम् पक्षे महानसीयवह्न्यभावग्रहकाले पक्षधर्मिकवह्न्यनुमितेर्महान-

सीयवह्नित्वावच्छिन्नप्रकारकत्वासम्भवात् बाधेनेतरबाधस्य दुर्बलत्वात् वह्नित्वावच्छिन्नविधेयताप्रयोजकस्य च परामर्षस्य प्रतिबन्धकाभावस्य च सत्त्वेन तन्निरूपकत्वस्य च सम्भवाद् दोषयोरभावात् ॥ यदि चानुभवबलात्तत्रानुमितिरेव नस्वीक्रियत इत्युच्यते तदापि प्रकृतलिङ्गजन्याया अपि वह्निमत्तादृशमहानसादिविषयिण्या वह्निमत्तादृशमहानसत्वाद्यवच्छिन्नविधेयतानिरूपिकाया महानसीयवह्नित्वावच्छिन्नप्रकारताशून्याया अनुमितेस्सम्भवेन तत्र प्रतिबन्धकत्वाभावान्नातिव्याप्तिसम्भवइतिगृहाण ॥ नच गदाधरमतेऽव्याप्तिः स्वरूपसम्बन्धेन वह्निमत्तादृशमहानसविधेयकमहानसोद्देश्यकानुमितेरेवाव्यापकविषयताशून्यत्ववत्याः सम्भवात् ॥ यत्तु यदि स्वरूपत्वादिना संयोगाद्यवगाहिसंसर्गभ्रमस्यासम्भवो यदि च प्रमेयत्वेन वह्निमान्निखिलतादृशप्रमेयावगाहिज्ञानस्यैव यद्रूपावच्छिन्नविषयताकत्वं यदिवा प्रमेयत्वादिना गुणादीनामपि न संयोगादिनाभ्रमस्तदा वह्निमदनुयोगिकस्वरूपेण महानसीयवह्नीतरवह्न्यभाववत्प्रमेयपक्षकवह्न्यभावसाध्यकस्थले तादृशप्रमेयत्वावच्छेदेन वह्निमत्तादृशप्रमेयबाधे गदाधरमतेऽव्याप्तिर्दुरुद्धरा दोषघटकसम्बन्धमात्रेणैव तादृशप्रमेयवत्त्वप्रसिद्धिसम्भवेन तदवच्छिन्नविषयताया अव्यापकीभूताया दोषविधेयकानुमितौ नियमेन सत्त्वात् । वह्न्यभावश्चात्र कालिकसम्बन्धावच्छिन्नप्रतियोगिताकः तेन स्वरूपेण वृत्तिमतोध्वंसादिरूपप्रमेयस्यापि वह्निमत्त्वेन दोषघटकत्वसम्भव इति तन्न तादृशप्रमेयोद्देश्यिकायाः स्वरूपेण महानसीयवह्निप्रकारिकाया अनुमिते स्तथात्वस्य सम्भवात् इति चेन्न अनुमितेस्संशयाकारतामते संशयाकारानुमितौ प्रतिबन्धकत्वासत्त्वेनासम्भववारणाय संशयान्यत्वस्य अप्रामाण्यज्ञानास्कन्दितानुमितिमादायाव्याप्तिवारणायाप्रामाण्यज्ञानानास्कन्दितत्वस्य च ज्ञानपदार्थतावच्छेदकतया विवक्षणीयतया लिङ्गज्ञानजन्यत्वस्य व्यावर्त्याभावेन लिङ्गपदस्य तत्र निष्प्रयोजनलक्षणास्वीकारस्यानुचितत्वात् ॥ अथाहार्य्यज्ञानमेव व्यावर्त्यमितिचेत् सत्यम् परन्तु ज्ञानपदलक्षणाया आवश्यकत्वे संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वरूपधर्मद्वयविशिष्टज्ञानलक्षणायाङ्गौरवात् प्रतिबन्धकतावच्छेदकीभूताभाववदन्यत्वविशिष्टज्ञानलक्षणैवोचिता अभाववत्ताच स्वप्रति-

योगितादात्म्य स्वप्रतियोगित्ववत्त्वान्यतरसम्बन्धेन प्रतियोगित्ववत्ता-च स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छिन्नाधिकरणत्वसम्बन्धेन ॥

इदन्तुबोध्यम् भेदस्याव्याप्यवृत्तित्वेऽनियताहार्य्यस्योत्पत्ति-क्षणमात्रावच्छेदेनाप्रामाण्यज्ञानवतो ज्ञानस्यापिचाहार्य्यभेदवत्त्वाद-प्रामाण्यज्ञानवदन्यत्वाच्च भेदएव प्रतिबन्धकतावच्छेदकीभूतोऽभाव, इति स्वप्रतियोगितादात्म्यमात्रं संसर्गः। यदि भेदोऽव्याप्यवृत्तिस्त-दाऽप्रामाण्यज्ञानाभावादिवत्संशयत्वाभावस्यैव प्रतिबन्धकतावच्छेद-कत्वमभ्युपेत्य स्वप्रतियोगित्ववत्त्वमेवसंसर्गइति एवञ्चाहार्य्यज्ञान-स्याव्यतएववारणसम्भवे दुर्व्वारमेवाव्यावर्त्तकत्वं लिङ्गज्ञानजन्य-त्वस्य ॥ एतेन संशयाकारानुमित्यस्वीकारेऽपि नक्षतिः अप्रामाण्य-ज्ञानास्कन्दितानुमितिवारणाय ज्ञानपदलक्षणाया आवश्यकत्वेऽ-भाववदन्यत्वविशिष्टज्ञान एव तस्या उचितत्वादग्राह्यसमालाश्र-यणापेक्षया यद्वा लक्षणाया आवश्यकत्वेऽनिरूढाया अप्रामाण्य-ज्ञानाभावविशिष्टानुमितावेव तत्करणमुचितन्नत्वनुमितित्वलाभार्थं-लिङ्गपदोपदानमित्याशयः ॥

यादृशपक्षसाध्यकदोषविषयकानुमितेरप्रसिद्धिस्तादृशस्थलेऽ-व्याप्तिरितितु ऋजवइत्यलम् ॥

यद्यप्यत्र अव्यापकविषयताशून्यत्वस्य ज्ञानविशेषणत्वावश्यक-त्वे हेत्वघटितदोषमात्रे लक्षणासम्भव एवाविवक्षितत्वबीजत्वेनोद्भाव-यितुमुचितः तथाप्यव्यापकविषयताशून्यज्ञानीयत्वस्य विषयताविशे-षणत्वेन विवक्षायान्दोषासम्भवादनतिप्रयोजनत्वमेवं तद्बीजत्वेनोक्त-म् ॥ यद्वा लिङ्गविषयकत्वं न लिङ्गतावच्छेदकावच्छिन्नविषयताकत्वरू-पं ह्रदोवह्निमान्वह्निमद्ध्रदादित्यत्र दोषविषयकलिङ्गविषयकज्ञानस्या-हार्य्यत्वेनाव्याप्त्यापत्तेः ॥ यत्तु ह्रदोवह्निमाञ्जलवद्ध्रदादित्यत्र वह्न्य-भाववज्जलवत्यतिव्याप्तिः. वह्न्यभाववज्जलवद्विषयकनिश्चयस्य ज-लवद्ध्रदत्वावच्छिन्नविषयकस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्ध-कत्वादिति तत्तुच्छम् विवक्षणीयस्य विशिष्टद्वयाघटितत्वस्य फ-लतो निश्चयविशेषणताया एव लाघवेन युक्ततया अतिप्रसक्तेरसम्भ-वात् तस्मादव्याप्तिवारणाय लिङ्गनिष्ठविषयताकत्वमेव निवेश्यन्त-थाच न हेत्वघटितदोषेष्वव्याप्तिसंभवइति ॥

केचित्त्वव्यापकविषयतायां लिङ्गतावच्छेदकावच्छिन्नविषयताव-

हिर्भूतत्वस्यिविशेषणन्तथाच न दोष इतिवदन्ति तदसत् ह्रदोवह्नि- मान्वह्न्यभाववज्जातिमत इत्यत्र जातिमान्वह्न्यभाववानितिज्ञानस्य तथात्वस्यवारणादव्याप्तेस्तदवस्थानादिति ॥

अत्र बाधादिज्ञानस्य लिङ्गाविषयकत्वाद्व्यर्थत्वाच्चेत्यभिहि- तं मथुरानाथेन चिन्तामणिव्याख्याने तस्यायमाशयः यद्विष- यकत्वेनेतितृतीयया यद्विषयकत्वस्यैवोद्देश्यविधेयभावमहिम्ना लि- ङ्गविषयकत्वस्याऽव्यवच्छेदकत्वलाभसम्भवेन तद्विवक्षायाम्बाधादि- ज्ञानस्य लिङ्गविषयकत्वानियमेन तत्प्रतिबन्धकतायान्तस्यानव- च्छेदकत्वादव्याप्तिः लिङ्गविषयकत्वेऽवच्छेदकत्वाविवक्षणे चानति- प्रयोजनकत्वमिति ॥

तृतीयार्थोवच्छेदकत्वमिति अथात्र विषयोघटो विषयिज्ञानमित्यु- भयविधानुभवादनुव्यवसाये भासमानविषयसम्बन्धस्य विषय- तारूपत्वे विषयितारूपत्वे वा क्षत्यभावाच्च विषयत्वमतिरि- क्तं तन्निरूपकत्वं विषयित्वं विषयित्वमतिरिक्तन्तन्निरूपकत्वमेव वि- षयत्वमित्यत्र विनिगमकाभावाद्विषयत्वविषयित्वयोर्द्वयोरेव वि- लक्षणयोस्सिद्धौ कस्य प्रतिबन्धकतावच्छेदकत्वमिति विमर्षे वि- षयित्वं न प्रतिबन्धकतावच्छेदकङ्गौरवात् तथाहि पर्वतोवह्नि- मानित्यस्य पर्वतत्वावच्छिन्नाविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रका- रतानिरूपितप्रकारितावन्निश्चयत्वेन, प्रतिबन्धकत्वस्वाच्यं नहि तत्र प्रकारत्वविशेष्यत्वे अप्रवेश्य पर्वतनिरूपितविशेष्यित्ववह्निनिरूपित- प्रकारित्वयोस्साक्षादवच्छेदकत्वसम्भवः पर्वतांशे वह्न्यनवगाहिनो- पि वह्निप्रकारकपर्वतविशेष्यकज्ञानस्य प्रतिबन्धकत्वापत्तेः । नच प्रकारविशेष्ययोर्मध्ये विशेषणावलम्बत्वेन विशेष्यस्य प्रधानत- या विशेष्यितारूपाविशेष्यसम्बन्धावच्छिन्ने प्रकारित्वलक्षणविशेष णसम्बन्धाभ्युपगमात् प्रकारित्वावच्छेदकविशेष्यितावन्निश्चयत्वेन, प्रतिबन्धकत्वे न गौरवम् । अस्तुवा परस्परमवच्छेद्यावच्छेदकभाव- स्तावतापि न नोहानिः कल्पनागौरवमितिचेत् ममावच्छेद्याव- च्छेदकभावस्य कल्पनं तव निरूप्यनिरूपकभावस्येत्यविशेषादेकसद्- भावेऽपराकल्पनस्याप्युभयोस्तुल्यत्वादितिवाच्यं द्रव्यनिरूपितप्रका- रिताया वह्निनिरूपितत्वेन द्रव्यवान्पर्वतइत्यस्य प्रतिबन्धकत्वाप- त्त्या वह्नित्वावच्छिन्ननिरूपकतानिरूपितप्रकारित्वावच्छिन्नत्वं प्रवेश्य-

नीयमितिवह्नित्वावच्छिन्नप्रकारतानिरूपितत्वघटितस्यावच्छेदकत्वापेक्षया गौरवात् ॥ नचाविषयीभूतस्यावच्छेदकत्वासम्भवेनावच्छेदकानिरूपिताया अपि विलक्षणविषयितायाः स्वीकृततया तस्याः प्रकारितायाश्चावच्छेद्यावच्छेदकभावेन वह्नित्वनिरूपितविषयित्वावच्छेद्यप्रकारित्वावच्छेद्यत्वप्रवेशेन गौरवाभावः यद्विषयत्वयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयित्वयोरवच्छेद्यावच्छेदकभावस्याभ्युपगम्यत्वेन सर्वसामञ्जस्यादितिवाच्यं प्रमेयत्वादिना वह्नित्वमवगाहमानस्यापि प्रतिबन्धकत्वापत्तेः तज्ज्ञानवृत्त्यवच्छेदकतानिरूपिताविषयिताया वाह्नित्वानिरूपितत्वात् निरवच्छिन्नावच्छेदकतानिरूपितत्वप्रवेशे गौरवात् इतिकेचिदाहुः ।

तदपरे नमन्यन्ते तथाह्यत्र यद्यपि विषयितायानिरवच्छिन्नत्वमवच्छेदकत्वानिरूपितत्वं तच्च नावच्छेदकानिरूपितविषयित्वे सम्भवति प्रकारनिरूपितविषयित्वस्यावच्छेदकत्वात् तथाप्यवच्छेदकानिरूपित विलक्षणविषयित्वानवच्छिन्नत्वरूपं तत्कार्यकारिविशेषणन्तत्राप्यस्त्येव नच प्रमेयत्वेनप्रमेयस्यावच्छेदकत्वे प्रमेयत्वानिरूपितविषयित्वे तदसम्भवः तस्य प्रमेयनिरूपितविलक्षणविषयित्वावच्छेद्यत्वादितिवाच्यम् विषयित्वस्य प्रतिबन्धकतावच्छेदकतायामप्येतत्पर्य्यनुयोगस्य परस्परनिरूप्यनिरूपकभावानभ्युपगमेन तत्रेवात्रापि परस्परावच्छेद्यावच्छेदकभावानभ्युपगमेन परिहारस्यापिच तुल्यत्वात् परस्परनिरूप्यनिरूपकभावाङ्गीकारे ऽवच्छेदकतानिरूपितावच्छेदकतानिष्ठनिरवच्छिन्नत्वं यथा स्वनिरूपितत्व स्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेनावच्छेदकताविशिष्टान्यत्वं तथा तन्निरूपितविषयितानिष्ठमवच्छेदकानिरूपितविलक्षणविषयितया स्वावच्छेद्यत्व स्वभिन्नावच्छेद्यत्वोभयसम्बन्धेन विशिष्टं यत्तदन्यत्वं तद्वाच्यम् ॥ वस्तुतो विषयतानिष्ठं विशेष्यत्वानवच्छिन्नत्वमिव विषयितानिष्ठं विशेष्यित्वानवच्छिन्नत्वमेव तद्विवक्षितम् नचास्माकमेकमेवतत् भवतान्तु विशेष्यतावच्छेदकानिरूपितविषयित्वे विशेष्यित्वानवच्छिन्नत्वासम्भवेन यथायथाम्विलक्षणविषयित्वानवच्छिन्नत्वं तद्विशिष्टान्यत्वञ्च तद्वाच्यमित्यनेकरूपत्वं तत्र तत्र गौरवञ्च किञ्च साक्षात्परम्परासाधारणानिरूपितत्वाभ्युपगमे प्रमेयवतोविशेष्यतावच्छेदकत्वे प्रमेयत्वरूपावच्छेदकनिरूपितविषयित्वे त्रिप्रकारस्य तस्यासम्भवः ।

नच विशेष्यित्वानवच्छिन्नत्वस्य सम्भवः प्रमेयत्वनिष्ठावच्छेदकतया विशेष्यतानिरूपितत्वस्य कथञ्चित्सत्त्वे तन्निरूपितविषयित्वयोरवच्छेद्यावच्छेदकभावसम्भवादितिवाच्यं पर्वतोवह्निमानित्यत्र पर्वतत्वे पारतन्त्र्येण वह्निमानस्य स्वीकृततया भवत्कल्पेपि पर्वतत्वादिनिष्ठावच्छेदकतायास्विशेष्यत्वानवच्छिन्नत्वासम्भवादिति पारतन्त्रीयविशेष्यत्वावाच्छिन्नावच्छेदकतानिष्ठनिरवच्छिन्नत्वस्यान्यादृशस्यैव वाच्यतयाऽनेकरूपतायास्तुल्यत्वादवच्छेद्यावच्छेदकभाववैलक्षण्याभ्युपगमेन तत्सम्पादनेनैकरूपतोपपादनस्यावच्छेद्यावच्छेदकभावापन्नस्वातन्त्रीयविषयत्वद्वयनिरूपितविषयित्वयोरवच्छेद्यावच्छेदकभाववैलक्षण्यमभ्युपेत्य तादृशावच्छेदकत्वानिरूपितत्वप्रवेशेनैक्योपपादनेन तुल्यत्वाच्च॥

अस्तुवा विशेष्यतावच्छेदकनिरूपितविषयित्वे विशेष्यत्वानवच्छिन्नावच्छेदकतानिरूपितत्वमेव निरवच्छिन्नत्वकार्य्यकारितथापि नगौरवं संशयस्याप्रतिबन्धकतया तद्वारणाय प्रकारित्वानवच्छिन्नत्वस्य प्रकारितायामस्माभिः प्रवेश्यत्वात् भवद्भिश्चतत्र तत्र प्रकारित्वानवच्छिन्नप्रकारितानिरूपितत्वस्य प्रवेशनीयतया साम्यात्॥ नच दण्डाभाववान्दण्डइतिबुद्धिम्प्रति रक्तदण्डवान् पुरुषइतिबुद्धेः प्रतिबन्धकत्वापत्तिः दण्डस्य प्रकारत्वाद्विशेष्यत्वाच्च तयोरवच्छेद्यावच्छेदकभावे तन्निरूपितविषयित्वयोरवच्छेद्यावच्छेदकभावसम्भवात् प्रतिबन्धकतावच्छेदकस्य दण्डत्वावच्छिन्ननिरूपितप्रकारित्वावच्छिन्नदण्डत्वावच्छिन्ननिरूपितविशेष्यित्वस्य सत्त्वादितिवाच्यम् साक्षात्तत्सम्बन्धेन तदभाववत्तावुद्धौ परस्परासम्बन्धेन तेन तद्वत्तावुद्धेः प्रतिबन्धकतावारणाय विषयत्वस्य प्रतिबन्धकतावच्छेदकत्वपक्षे संसर्गताद्वारकप्रकारतानिरूपितत्वाविशिष्टविशेष्यत्वस्य प्रतिबन्धकतावच्छेदकत्वमिव विषयित्वस्य प्रतिबन्धकतावच्छेदकत्वेपि संसर्गतानिरूपितविषयित्वद्वारकप्रकारित्वावच्छेद्यत्वविशिष्टविशेष्यित्वस्यैव तत्त्वम्वाच्यमिति तद्दोषासम्भवात्॥ नच तत्र निरूपितत्वस्य प्रकारत्वसंसर्गतया प्रवेशोऽत्रचावच्छेदकतानिरूपितत्वस्य प्रकारित्वसंसर्गतयेत्यत्र गौरवमितिवाच्यम् अवच्छेदकतावदतिरिक्तस्याखण्डावच्छेद्यत्वस्यैवात्र संसर्गतया प्रवेशेन गौरवाभावात् एवञ्च विनिगमकाभा-

वात् विषयत्वस्विषयित्वञ्च प्रतिबन्धकतावच्छेदकमस्तु॥ अथवा घटा-भावज्ञानञ्च वह्निमत्ताबुद्धिप्रतिबन्धकं प्रतिबन्धकतावच्छेदकधर्मशून्य-त्वादित्यादिप्रयोगविषयप्रतिबन्धकतावच्छेदकधर्म्माभावस्य निरूप-कत्वसम्बन्धावाच्छिन्नप्रतियोगिताकस्य वृत्त्यनियामकसम्बन्धस्य प्रति-योगितानवच्छेदकत्वपक्षेऽप्रसिद्धेः स्वरूपेण विषयित्वमेव प्रतिबन्ध-कतावच्छेदकमभ्युपेयस्विषयतानिरूपकत्वञ्च गौरवादेव न ता-दृशामिति यद्विषयकत्वशब्दलभ्यस्य यन्निष्ठविषयतानिरूपकत्वस्य प्रतिबन्धकतानवच्छेदकतया लक्षणवाक्यार्थासम्भव इति पूर्वपक्षे प्र-तिविधानमुच्यते तात्पर्य्यान्यथानुपपत्त्या निरूपकत्वसम्बन्धेन यद्वि-षयताविशिष्टस्य, यन्निरूपितविषयिताविशिष्टस्य वा लक्षणया समस्तयद्विषयकशब्दघटकशब्दार्थत्वाद्दोषस्य नसम्भव इति । तदाऽसम्भव इति नच सर्व्वपक्षकावृत्तित्वसाध्यकस्थले सप्रका-रक ज्ञानमात्रस्यैव सर्व्वधर्म्मिकावृत्तित्वग्रहप्रतिबन्धकत्वेन गुरुत्व-त्वविशिष्टेनाऽव्याप्तिः तद्विषयकस्य निर्व्विकल्पस्य चासम्भवा-दिति वाच्यम् यत्राधारताप्रतीतिस्तस्यैव सप्रकारकस्य प्रमेय-त्ववानित्यादिरूपस्य प्रतिबन्धकत्वात् स्वरूपतः प्रमेयत्वप्रकारक-स्य प्रमेयमिति ज्ञानस्यप्रतिबन्धकताया अनुभवातीतत्वात् तस्य च गुरुत्वविषयकतयाऽव्याप्तेरसम्भवात् स्वरूपतस्तत्तद्धर्मप्रका-रकस्यापि ज्ञानस्य प्रतिबन्धकत्वे उक्तस्थलस्याहार्य्यस्थलतयैतल्ल-क्षणे तत्र दोषस्यानुद्धार्य्यत्वेन तत्स्थलस्यानुपन्यसनीयत्वादि-ति भावः ।

शुद्धहृदत्वेति वह्न्यभावाविशेषितेत्यर्थः तेनाभाववान्हृद इत्यादि ज्ञानमादाय दोषसम्भवेपि नक्षतिः ।

असम्भवभयेनेति प्रतिबन्धकतावच्छेदकताया हृदविषयताति रिक्तवह्न्यादिविषयत्वेऽपि सत्वेन वह्न्यभाववद्हृदविषयत्वस्य प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणत्वासम्भवादित्यादिः। नच प्रत्येकविषयत्वस्यावच्छेदकतापर्य्याप्त्यनधिकरणत्वे तदनातिरिक्त समुदाये तदभावापत्त्या प्रत्येकस्य तथात्वे कुतोऽसम्भव इति वाच्यम् तथैव वह्न्यादावतिप्रसङ्गात् तद्वारणाय च यद्विषयता-मात्रगतरूपन्तादृशावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकमित्यस्य विवक्षितत्वेऽसम्भवस्य जागरूकत्वादिति भावः ।

यद्रूपावच्छिन्नेति, यद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकेत्यर्थः तेन वह्न्यभावविशिष्टह्रदत्वस्य ह्रदत्वानतिरिक्तत्वेऽपि नासम्भवः तादृशञ्च रूपं वह्नित्ववह्न्यभावत्वाभावह्रदत्वगतसमुदायत्वमेव नच तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वमभावविशेषितवह्निविशेषितह्रदत्वावच्छिन्नविषयतायामपीति दोष इति वाच्यं वह्नित्वसमवायवह्निप्रतियोगित्वाभावत्वस्वरूपाभावह्रदत्वगतसमुदायत्वमेव हि यद्रूपपदेनोपादेयं विषयतानिरूपितावच्छेदकत्वञ्च साक्षात्परम्परासाधारणं धर्मसंसर्गसाधारणञ्च विवक्षितं तथाचोक्तविषयतायास्तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वविरहाददोषः पटाभावपक्षकघटसाध्यकस्थले घटत्वसमवायघटप्रतियोगित्वाभावत्वस्वरूपाभावपटत्वपटप्रतियोगित्वाभावत्वगतसमुदायत्वस्य पटत्वसमवायपटप्रतियोगित्वाभावत्वाभावघटत्वघटाभावत्वगतसमुदायत्वस्य च समानजातीयसमपदार्थवृत्तित्वेनाभिन्नत्वप्रतीतावपि न वस्तुतोऽभिन्नत्वम् एकस्य घटाभाववृत्तित्वादपरस्य च पटाभाववृत्तित्वात् तथासति प्रथमप्रदर्शितसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वस्य पटाभाववद्घटाभावत्वावच्छिन्नविषयतायामभावान्न तत्रापि दोषसम्भावना 'एवमभावपक्षकसंयोगेन वाच्यत्वसाधकस्थले वाच्यत्वत्वस्वरूपवाच्यत्वप्रतियोगित्वाभावत्वाभावाभावत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वस्य स्वरूपेण वाच्यत्ववदभावेन प्रतियोगितया विशिष्टाभावत्वावच्छिन्नविषयतायान्न सत्वम् । यद्यपि तादृशविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्वाच्यत्वत्ववाच्यत्वस्वरूपाभावाभावत्वप्रतियोगित्वगतसमुदायत्व एव तथापि प्रागुक्तसमुदायत्वस्य वाच्यत्वत्वावच्छिन्नातियोगित्वे ऽस्य वाच्यत्वविशिष्टाभावत्वावच्छिन्नप्रतियोगित्वे सत्वमित्युभयोर्भेदात्, नचाभाववद्वाच्यत्वाभावत्वावच्छिन्नविषयतायां उक्तरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वादिति वाच्यं वाच्यत्वत्ववाच्यत्वप्रतियोगित्वाभावत्वाभावस्वरूपाभावत्वगतसमुदायत्वे भावत्वाभावस्वरूपवाच्यत्वत्ववाच्यत्वप्रतियोगित्वाभावत्वगतसमुदायत्वाद्भेदस्योक्तविषयतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य च स्वीकारात् वाच्यत्वाभाववदभावत्वाव-

च्छिन्नविषयतायां वाच्यत्वाभाववत्त्वस्याभाववद्वाच्यत्वाभावत्वाव-
च्छिन्नविषयतायां चाभाववत्त्वस्यावच्छेदकत्वे सर्व्वथैव दोषास-
म्भवादुक्ताधिकरणत्वयोर्भेदात् नचाधिकरणताघटितधर्म्मावच्छिन्न-
विशिष्टविषयत्वस्याधिकरणताप्रकारकज्ञानेपि सत्त्वेन तत्र प्रतिब-
न्धकताविरहाद्दोष इति वाच्यं तज्ज्ञानीयविशिष्टविषयताया अधि-
करणत्वत्वावच्छिन्नाधिकरणत्वस्यैवावच्छेदकत्वात् प्रकारतया भा-
समानधर्म्मनिरूपिताधिकरणत्वस्यैव सर्व्वत्र विशिष्टविषयतावच्छे-
दकत्वाङ्गीकारात् ।

इदञ्च साक्षात्परम्परासाधारणैकनिरूपितत्वाङ्गीकारेण अन्य-
था यद्रूपविशेषितयद्रूपावच्छिन्नविषयत्वम्प्रतिबन्धकतावच्छेदक-
न्तद्रूपविशेषिततद्रूपावच्छिन्नत्वं यद्यद्रूपविशेषितयद्रूपावच्छिन्नं या-
दृशरूपविशेषितयद्रूपावच्छिन्नञ्च विषयत्वम्प्रतिबन्धकतावच्छेद-
कन्तत्तद्रूपविशेषितयद्रूपावच्छिन्नत्वं तादृशरूपविशेषिततद्रूपावच्छि-
न्नत्वञ्चाननुगतमनेकमेव लक्षणस्वाच्यंगत्यन्तराभावादिति ध्येयम् ।

यद्यपि वह्न्यभाववद्ध्रदादिप्रकारकत्वेन प्रतिबन्धकत्वन्ना-
स्ति तथापि ह्रदेवह्न्यभाव इति ज्ञानस्य ह्रदप्रकारकत्वेना-
नुमिति प्रतिबन्धकत्वमस्ति तत्त्वस्य च वह्न्यभाववद्ध्रदेपि स-
त्त्वाद्विशिष्टस्य विशेष्यत्वानातिरिक्तत्वान्नासम्भवः तेन दोषप्रका-
रत्वस्य प्रतिबन्धकतानवच्छेदकतयाऽसम्भवापत्त्या यत्प्रकारत्वेने-
त्यादिवक्तुमशक्यमितिशङ्कानिरस्ता एवञ्चोक्तविवक्षायां पक्षवि-
शेषणकभ्रमविषयसाध्याभावे दोषसम्भवेपि पक्षे यद्यप्यतिव्या-
प्तिर्भवत्येव तथापि सद्धेत्वादिनिष्ठ इत्युक्त्या दुष्टलक्षणातिव्या-
प्तिपर्य्यन्ततान्दीधित्युक्तातिव्याप्तेराकलय्य पक्षविशेषणकभ्रमविषय-
मादाय प्रसिद्धसद्धेतावतिव्याप्त्यभावात्पक्षविशेष्यकेत्युक्तमित्याह
यत्प्रकारकत्वेनेत्यादि ननु पर्व्वतत्वावच्छेदेन पक्षत्वे वह्नेः साध्यताया-
न्धूमस्य सद्धेतुत्वविरहात् पर्व्वतत्वसामानाधिकरण्येन पक्ष-
तायां सद्धेतुत्वेपि तादृशपक्षसाध्यहेतुकानुमितिम्प्रत्यवच्छेदकाव-
च्छेदेनैव वह्न्यभाववत्ताबुद्धेर्व्विरोधितया तदवच्छेदकप्रकारताव-
च्छेदकीभूतस्य पर्व्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपस्या-
प्रसिद्धत्वात् तेन च वह्न्यभावस्य धूमेऽसत्वात् पक्षविशेष्य-
कभ्रममादायापि न दोषइति चेन्न प्रकारतानिरूपितसंसर्गता-

वच्छेदकतायाःपर्य्याप्तिनिवेशेप्रयोजनाभावात् तन्निष्ठनिरूपकतानिरू-
पितसंसर्गतायां प्रकारतानिरूपितसंसर्गतावच्छेदकावाच्छिन्नत्वमा-
त्रनिवेशेनैवान्यतरसम्बन्धेन पर्व्वतादिमत्वमादाय दुष्टत्वापत्तिवार-
णसम्भवात् तथाच स्वरूपत्वावच्छिन्नेन संसर्गेण वह्न्यभावस्य
धूमे सत्वान्नासङ्गतिः। नचैवं, स्वरूपसम्बन्धावच्छिन्नाधेयत्वनिष्ठसं-
सर्गतायाःप्रतिबन्धकतावच्छेदकपर्व्वतनिष्ठप्रकारतानिरूपितायामव-
च्छेदकीभूतं यदाधेयतात्वं तदवच्छिन्नसंयोगसम्बन्धावच्छिन्नाधे-
यत्वसम्बन्धेन पर्व्वतस्य धूमे सत्तया पक्षविशेषणकभ्रममादायाप्य-
तिव्याप्तिरितिवाच्यम् प्रतिबन्धकतावच्छेदकप्रकारतानिरूपितसंस-
र्गतानिरूपितसाक्षादवच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेद-
करूपवृत्तित्वस्य निरूपिकतानिरूपितसंसर्गतायाम्विवक्षितत्वात् त-
थाच वह्न्यभाववान्पर्व्वतइतिज्ञानीयप्रकारतानिरूपितसंसर्गताया-
श्च वह्न्यभावप्रतियोगिकत्वस्वरूपत्वे एव साक्षादवच्छेदक इति तद-
तिप्रसङ्गसङ्गतिः। पर्व्वते वह्न्यभावइतिज्ञानीयप्रकारतानिरूपितसंस-
र्गतायाश्चाधेयतात्वस्वरूपसम्बन्धावच्छिन्नत्वे धूमनिष्ठसम्बन्धितानि-
रूपितपर्व्वतनिष्ठनिरूपकतानिरूपितसंसर्गतायाश्च संयोगावच्छिन्नाधे-
यतात्व इति न तस्यास्तादृशरूपवृत्तित्वमिति न पर्व्वतमादायातिप्रसङ्ग-

अथ संयोगेनवह्न्यभावव्याप्यपर्व्वतइतिज्ञानीयपर्वतनिष्ठप्रकारता-
निरूपितायां तन्निष्ठनिरूपकतानिरूपितायाश्च संसर्गतायां संयोगसम्ब-
न्धावच्छिन्नत्वाधेयतात्वयोरेव साक्षादवच्छेदकत्वान्निरूपकत्वनिरूपि
तसंसर्गत्वस्य तादृशरूपवृत्तितया पक्षविशेषणकभ्रममादायापिधूमे-
ऽतिप्रसङ्गः इतिचेदत्रकेचित्।

विधेयसंसर्गे उद्देश्यतावच्छेदकव्यापकत्वमिवोद्देश्यतावच्छेद-
कसंसर्गे विधेय्यव्याप्यत्वमपि भासते तुल्ययोग क्षेमत्वात् त-
थाच प्रकृतानुमितिप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टनिरूपक-
ताकसम्बन्धितावत्वमेव दुष्टत्वव्यवहारानियामकम्वाच्यम्। वैशि-
ष्ट्यञ्च स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्व-
निरूपितावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्या-
प्त्यनुयोगितावच्छेकरूपवृत्तिसंसर्गताकावच्छेदकताकत्वैतत्त्रितयसंब-
न्धेन तथाच पर्व्वतेवह्न्यभावव्याप्य इतिज्ञानीयपर्व्वतप्रकारता
निरूपितावच्छेदकतानिरूपितसंसर्गताया वह्न्यभावव्याप्यव्याप्य

पर्व्वतत्वप्रतियोगिकसमवायत्वोभयधर्म्मावच्छिन्नतया तन्निरूपिताव-च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्ते र्निरूपकतावच्छेदकतानिरूपितसंसर्गत्वस्याप्रसिद्ध्या न पर्व्वतमादायातिव्याप्ति-रितिवदन्ति ॥

वस्तुतस्तु पक्षविशेष्यकेति यदुक्तं तत्पक्षविशेष्यकस्यैव भ्रम-स्य प्रकारीभूतौ साध्याभावहेत्वभावावेवादाय प्रसिद्धधूमादावति-व्याप्तिप्रसङ्गो नतु तद्विशेष्यकपक्षविशेष्यकभ्रमस्य प्रकारीभूतस्प-क्षाम्विशेष्यीभूतसाध्याभावहेत्वभावावप्यादायेत्याशयेन नतु पक्षविशे-षणकस्यकस्यापि भ्रमस्य प्रकारीभूतम्पक्षामादाय नातिप्रसङ्गइत्यभि-प्रायेण तथासति प्रागुक्तप्रकारताविशिष्टत्वविवक्षयामपि द्रव्यवान् वह्न्यभाववानिति ग्रहकालीनस्य पर्व्वतेद्रव्यमितिज्ञानस्य प्रतिबन्धक-तया तदीयपर्वतप्रकारतामादायातिप्रसङ्गस्य दुर्वारतयाऽसङ्गतेर्दु-र्वारत्वात् । नच तज्ज्ञाननभ्रम इतिवाच्यं भ्रमपदस्य निश्चयपरतायाउक्तत्वात् द्रव्यत्वादिना पदार्थान्तरावगाहित्वेन भ्रमत्वस्यापि सम्पा-दनीयत्वाच्च एवमुद्देश्यतावच्छेदके विधेयव्याप्यत्वभानं तत्संसर्गघट-कतयानुभवविरुद्धं पर्वतवह्न्यभावव्याप्य इतिज्ञानानन्तरम्पर्वतत्व-विशिष्टस्यैवानुव्यवसीयमानत्वात् पर्वतत्वांशे भ्रमत्वे तथात्वञ्च स्यादन्यथा वह्न्यभाववान्पर्वत इतिज्ञाने पर्वतत्वव्यापकतावच्छेद-कवह्न्यभावत्वप्रतियोगिकस्वरूपं वह्न्यभावत्वस्य संसर्गतयाभासेत-तथासति पक्षविशेष्यकभ्रममादावपि नदोषःस्यादित्यलम् ॥

अथ धूमत्ववान्पर्वतोवह्निमान्धूमादित्यत्र अनुमितिप्रातिबन्ध-कतावच्छेदकप्रकारताश्रयस्य धूमत्वाभावस्य धूमे विरहात् दुष्टत्वानु-पपत्तिः नच धूमाभाववान्पर्व्वतइति ज्ञानस्यापि प्रतिबन्धकतया त-त्प्रकारस्य धूमाभावस्य सत्तयैवास्तुदुष्टत्वमितिवाच्यं धूमाभावस्य-दोषानात्मकतया तेन दुष्टत्वव्यवहारोपपादन स्यापत्तिपर्य्यवसायि-त्वात् । नच धूमत्वनिष्ठपर्वतवृत्तित्वाभावस्य दोषतया प्रतिबन्धकी-भूतस्य धूमत्वम्पर्वतावृत्तीतिज्ञानस्य प्रकारीभूतन्तमादाय दुष्टत्वमुप-दपादनीयम् धूमस्य समवायेनपर्वतावृत्तित्वादितिवाच्यम् रूपत्ववान् पर्व्वतोवह्निमान्तद्रूपादित्यत्राव्याप्तेस्तथापिसम्भवात् । रूपेसमाय-सम्बन्धावच्छिन्नपर्व्वतवृत्तित्वाभावविरहात् ॥ न च रूपत्वनिष्ठाधे-यत्वे पर्वतनिरूपितत्वाभावस्यापिदोषतया तस्य रूपे सत्वान्न दोष

इति वाच्यं निरूपकत्वसम्बन्धेन पर्वतनिरुपिताधेयत्वानिरूपिताधेय-त्वविशिष्ट पर्वतपक्षकवह्निसाध्यकपर्वत निरूपिताधेयत्वहेतौ पक्षता-वच्छेदकनिष्ठपर्वतावृत्तित्वस्य पर्वतनिरूपितभावस्य पक्षतावच्छेदक-निष्ठाधेयत्वनिष्ठस्य पक्षनिष्ठपक्षतावच्छेकाभावस्य च हेतावसत्वा-दव्याप्तेर्दुर्व्वारत्वादितिचेन्न पक्षतावच्छेदकाभावव्याप्यनिष्ठपक्षवृत्ति-त्वस्योक्तेषु दोषतया दोषज्ञाने प्रकारीभूतपक्षवृत्तित्वस्य प्रागुक्तस-र्व्वहेतुषु सत्वाभावाद्दोषाभावादिति ॥

तेनसेद्धत्वादीत्यादीति तेनेदमुक्तम्भवति आदिपदग्राह्ये वाधिते-हेतौ पक्षविशेष्यकसाध्याभावज्ञानस्य प्रमात्वेन पक्षविशेष्यकभ्रमवि-षयसाध्याभावासत्वेनातिप्रसङ्गविरहादसङ्गतिः भ्रमपदस्य निश्चयप-रत्वे पक्षविशेष्यकप्रमाविषयसाध्याभावादेरेव सत्वेनातिव्याप्त्यान भवतीति तदिदमसङ्गतं पक्षविशेष्यकभ्रमविषयसाध्याभावस्यापि वाधिते सम्भवात् वह्न्यभाववान् ह्रदोघटवाँश्चेति ज्ञानस्य पक्षविशेष्य-कत्वाद्भ्रमत्वाच्च नच पक्षविषयसाध्याभावेत्युक्त्या विशिष्टान्वयम-हिम्ना पक्षे साध्याभावभ्रमस्यैव लाभेनोक्तभ्रमस्य न तथात्वमिवाच्यं विशिष्टान्ययविवक्षायाम्प्रयोजनाभावात् पक्षविशेष्यकेत्यस्यापि पक्ष-तावच्छेदकावच्छिन्नविशेष्यकार्थकतया पक्षतावच्छेदकांशे भ्रमरूप-तायाअपि विवक्षितत्वस्य वाच्यत्वात् अन्यथा पर्वतत्वेन जलाद्यवगा-हिवह्न्यभाववान्पर्वत इत्यादिभ्रमविषयसाध्याभावमादायापि दोषस-म्भवे तदप्रदर्शनेन न्यूनतास्यात् तथासति ह्रदत्वेनपर्वताद्यवगाहिवह्न्य भाववान्ह्रदे इतिभ्रमाविषयसाध्याभावसत्वेनासङ्गतेर्दुर्वारत्वात् स्व-रुपसमवायोभयसम्बन्धेन वह्न्यभाववान् ह्रदइति भ्रमविषयसाध्या-भावस्यापि सम्भवाच्चेति प्राप्ते प्रतिविधीयते आदिपदग्राह्ये ऽसद्धेतौ भ्रमाविषयसाध्याभावासत्वेनातिव्याप्तिविरहादसङ्गतौ न तात्पर्यं किन्तु भ्रमविषयेति विशेषकीर्तनाल्लुब्धस्य सद्धेतौ भ्रममात्रविषयसाध्याभा-वमादायातिप्रसङ्गस्यादिपदग्राह्येऽसद्धेतौ प्रमाविषयसाध्याभावादेरपि सत्वादसम्भवेनासङ्गतौ सा च भ्रमपदस्य प्रतिबन्धकत्वोपयोगि-निश्चयत्वविशिष्टपरतया न सम्भवति तथासत्युक्तार्थस्यालाभात् त-देवाह प्रमाविषसाध्याभावादेव सत्वेन भ्रमपदस्य यथाश्रुतार्थे याऽ-सङ्गतिः सा भ्रमपदस्य निश्चयसामान्यपरत्वे प्रमाविषयसाध्याभावा-देरेव सत्वेन न भवतीत्यर्थकेन तेनेत्थादिग्रन्थेन। एवञ्चैवकारोपि सङ्ग-

च्छते ऽन्यथा भ्रमविषयसाध्याभावसत्त्वस्यासङ्गत्यप्रयोजकत्वेनाऽव्यावर्त्तनीयतया व्यावर्त्याभावेन तदुक्तेर्वैफल्यापत्तेरिति ।

केचित्तु अत्रैवकारोऽप्यर्थकस्तथासति नासङ्गतिलेशोऽपीति वदन्ति ।

ऋजवस्तु नच पक्षविशेष्यकभ्रमविषयेत्यादिना यत्प्रागत्रोक्तं तावन्मात्रतात्पर्य्यमवलम्ब्य तेनेत्याद्युक्तमित्याहुः ।

वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयताया इति यद्यपि प्रकारतादिविलक्षणविशिष्टविषयताया अभावेऽप्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वपक्षे न क्षतिः वह्न्यभाववद्ध्रदवानितिज्ञानेऽनुमितिप्रतिबन्धके वह्न्यभाववद्ध्रदत्वावच्छिन्नप्रकारत्वात्मकविषयत्वसत्त्वेन लक्षणसम्भवात् नच तत्र ज्ञाने वक्ष्यमाणस्याव्यापकीभूतविषयताशून्यत्वस्याभाव इति वाच्यं प्रकारत्वविशेष्यत्वादिभिन्नस्य वह्न्यभाववद्ध्रदवत्त्वावच्छिन्नविषयत्वस्याभावात् तादृशस्य च वह्न्यभाववद्ध्रदवद्वानितिज्ञाने एव सत्त्वात् वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वस्य प्रकारतात्वादिना ऽव्यापकत्वेपि विषयतात्वेनैवाव्यापकत्वस्य प्रकृते प्रवेश्यतया क्षतिविरहात् वह्न्यभाववद्ध्रदस्य स्वरूपसम्बन्धेन प्रकारत्वेऽव्यापकविषयतायास्तत्राशङ्कितुमप्यनर्हत्वाच्च तथापि स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षे वह्न्यभाववद्ध्रदत्वावच्छिन्नविलक्षणविषयत्वाङ्गीकारस्यावश्यकत्वमन्यथाऽसम्भवापत्तेः प्रतिबन्धकतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वस्य तादृशप्रकारताया भिविरहात् तादृशविशेष्यत्वप्रकारत्वयोरवच्छेद्यावच्छेदकभावस्यैव स्वीकारात् नच विलक्षणविशिष्टविषयत्वाङ्गीकारेपि तथैव दोषतादवस्थ्यमितिवाच्यं प्रमेयवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतात्मकस्यैव तस्य स्वीकारात् विशिष्टविषयतात्वविशेष्यतात्वयोस्तद्धर्म्मयोरेवातिरिक्तयोरभ्युपगमात् ।

अथ प्रकारतात्वविशेष्यतात्वादिभिन्ने विषयतात्वव्याप्ये विशिष्टविषयतात्वरूपधर्मे मानाभाव इति चेन्न वह्न्यभाववद्ध्रदमहञ्जानामीत्यनुव्यवसाये विशिष्टबुद्धित्वस्यैव तत्र मानत्वात् तथाहि वह्न्यभाववद्ध्रदत्वविशिष्टस्य ज्ञाने विशेषणतयाऽवश्यमेव तत्सम्बन्धेन विशिष्टज्ञाने भासमानेन भवितव्यं सच वह्न्यभावविशिष्टह्रदत्वावच्छिन्नप्रतियोगिकत्वेन भासमानोवह्न्यभा-

वद्ध्रदत्वावच्छिन्नविषयतानिरूपितविषयितात्मक एव भविष्यति-
अन्यधर्मावच्छिन्नप्रतियोगित्वविषयत्वादेरन्यधर्मावच्छिन्नसंसर्गत-
द्घटकत्वयोरनभ्युपगमात् । नचातिरिक्तविषयित्वकल्पनामपे-
क्ष्य ह्रदत्वावच्छिन्नविषयित्वस्य कल्पनस्यैवसंसर्गत्वमस्तु वह्न्यभावा
विशेषणकह्रदज्ञानानन्तरन्तादृशानुव्यवसायश्च विशेषणतावच्छेदक
वह्न्यभावह्रदत्वोभयज्ञानविरहादेव न भविष्यतीतिवाच्यं वह्न्यभाववा-
न्ह्रद इतिज्ञानानन्तरस्यवह्न्यभावाविशेषणकह्रदज्ञाने जाते वह्न्यभावव
द्ध्रदमहञ्जानामीत्यनुव्यवसायापत्तेः विशेषणतावच्छेदकप्रकारक-
ज्ञानस्य पूर्वसत्त्वैव कारणतया तस्यापि सत्वात् ह्रदत्वावच्छिन्न-
विषयतासंसर्गेण वह्न्यभावाविशेषणकह्रदज्ञानस्यापि वह्न्यभावव-
द्ध्रदविशिष्टत्वेन विषयतया तस्य कार्य्यकालवृत्तितयापिसत्वाच्च ।
नच वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतै-
वास्तु संसर्गघटिका तथासति वह्न्यभाववान्ह्रद इति ज्ञानस्यैव
विषयत्वेन तस्य कार्य्यकालेऽभावेनापत्यभाव इति वाच्यं वह्न्यभा-
वत्वेनघटाभावाद्यवगाहिनो वह्न्यभाववान्ह्रद इति ज्ञानस्याप्रामा-
ण्यज्ञानास्कन्दितस्योत्तरं वह्न्यभाववद्ध्रदमहञ्जानामीत्यनुव्यवसा-
यापत्तेः। भ्रमात्मकज्ञानेपि वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रद-
त्वावच्छिन्नविशेष्यताकस्वरूपसंसर्गसत्वेन वह्न्यभाववद्ध्रदस्य स-
त्तया ऽनुव्यवसायस्य भ्रमत्वेनाप्रामाण्यग्रहाभावरूपदोषस्यानपेक्ष-
णात् । विशिष्टविषयत्वस्य संसर्गत्वे तस्य प्रमानिष्ठस्यैव कल्पिततया
तेन च संसर्गेण भ्रमविशेष्यकविशिष्टह्रदप्रकारकानुव्यवसायस्य
भ्रमत्वेनाप्रामाण्यग्रहाभावरूपदोषस्यापेक्षितत्वेन तदभावेनानुव्यव-
सायासम्भवात् । नच वह्न्यभावत्वावच्छिन्नवह्न्यभाववृत्तिप्रकारतानि-
रूपितह्रदत्वावच्छिन्नह्रदवृत्तिविशेष्यतैवास्तु संसर्गस्तथाच नोक्ता-
पत्तिरितिवाच्यं तत्तद्धर्मेषु वह्नुषु संसर्गतावच्छेदकत्वकल्पनापेक्षया
लाघवेनातिरिक्तविषयतात्वस्यैव संसर्गतावच्छेदकत्वकल्पनस्योचि-
तत्वात् ।

किञ्च वह्न्यभाववान्पर्वत इति ज्ञानादप्रामाण्यग्रहास्कन्दिता-
दनन्तरं वह्न्यभाववत्पर्वतमहञ्जानामीत्यनुव्यवसायापत्तिः वह्न्यभा-
वत्वावच्छिन्नवह्न्यभाववृत्तिप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताक-
त्वसम्बन्धस्य भ्रमे सत्वेन तदंशे भ्रमत्वविरहेणाप्रामाण्यग्रहाभावरूप-

दोषानपेक्षणात् पर्वतांशे वह्न्यभावावगाहित्वेन भ्रमत्वेऽपि तदंशे व्यवसायप्रयोजकदोषस्यैवापेक्षितत्वात् विलक्षणविषयित्वस्य संसर्गत्वे च तस्य भ्रमावृत्तित्वेन तदंशेऽपि भ्रमतया प्रामाण्यग्रहाभावरूपदोषस्य स्थलान्तरवदपेक्षितत्वेन तदभावेनापत्त्यभावात्। एवम्वह्न्यभाववान्ह्रद इति ज्ञानम्प्रमात्वेन जानानो वह्न्यभाववद्ध्रदमहञ्जानामीति प्रयुङ्क्ते नाप्रमात्वेनेत्यनुभवसिद्धं ततश्च तादृशशब्दो भ्रमात्मकज्ञानम्बोधयन्नप्रामाणं प्रमाणञ्च प्रमाम्बोधयन्निति विज्ञायते तत्र द्वितीयार्थे विषयित्वे न निरूपितत्वमात्रस्य संसर्गता वह्न्यभाववद्ध्रदनिरूपितविषयित्वस्य ह्रदमात्रज्ञानेऽपि सत्त्वात् विशिष्टधर्मावच्छिन्ननिरूपितत्वमेव संसर्गस्तस्माद्वाच्यः सच विशिष्टधर्मावच्छिन्नविषयतानिरूपितविषयित्वएववर्तत इति सिद्धम्विशिष्टविषयत्वम्। नच वह्न्यभाववत्पदसमभिव्याहृतह्रदपदोत्तरद्वितीयाया वह्न्यभावत्वावच्छिन्ननिरूपितविषयित्वावच्छेद्यविषयित्वमेवार्थो वह्न्यभाववत्पदञ्च तात्पर्यग्राहकं शुद्धह्रदत्वावच्छिन्नस्यैव निरूपितत्वं संसर्ग इति न तत्सिद्धिरिति वाच्यं तथासति वह्न्यभाववत्पर्वतमहञ्जानामीत्यादेरपि वाक्यस्य साधुतापत्तेः उक्तञ्च व्युत्पत्तिवादे लोहितवह्निञ्जानामीत्यादिवाक्यस्यासाधुत्वम्।

केचित्तु इदं ज्ञानं वह्न्यभाववद्ध्रदवदितिज्ञानं प्रमाविशेष्यकं प्रमा भवति भ्रमविशेष्यकम्भ्रमः तस्य भ्रमत्वप्रमात्वे विलक्षणविषयित्वरूपसंसर्गतन्त्रे एव वह्न्यभावादिवृत्तित्वविशेषितविषयतात्वादिना संसर्गत्वे मानाभावादिति वदन्ति ॥

परेतु प्रकारावच्छिन्नत्वमते ह्रदत्वावच्छिन्नविशेष्यताया एव वह्न्यभावावच्छिन्नत्वेन वह्न्यभाववद्ध्रदत्वावच्छिन्नतया प्रतिबन्धकतावच्छेदकत्वान्न दोष इत्याहुः। तन्नातिमनोहरम् विशेष्यतायाम्प्रकारावच्छिन्नत्वे वह्न्यभाववत्वेनह्रदमहञ्जानामीत्यभिलापस्यावच्छिन्नत्वार्थकतृतीयाघटितस्यैव मानत्वेन तृतीयायाः प्रकारार्थकत्वे तत्र मानाभावात्। वह्निमान्ह्रदत्ववानितिज्ञानम्प्रति वह्न्यभाववान् ह्रदत्ववानयमित्येकत्रद्वयंरीत्या जायमानस्य प्रतिबन्धकत्वापत्तेः इदन्निष्ठविशेष्यताया ह्रदत्वरूपप्रकारावच्छिन्नत्वात् वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वाच्च। वह्न्यभावत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूप्यता

वह्निशेष्यताकज्ञानत्वेन प्रतिबन्धकत्वे गौरवापत्तेरित्यास्तान्तावत् ॥

संशयादौसत्वात्पुनरिति ननु ह्रदपक्षकवह्निसाध्यकसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्न्यभाववद्भावहेतुकस्थले ह्रदोवह्निमान्नवेतिसंशयस्यापि हेतुमत्त्वग्रहप्रतिबन्धकत्वादव्याप्तिविरहेण नासम्भवसम्भवः यदिचासमानप्रकारकज्ञानस्याप्रतिबन्धकत्वपक्षे साध्याभाववदवृत्तित्वविषयकत्वस्यापि प्रकृतानुमितिविशेषणत्वेनोपादेयतया प्रकृतस्थले तदप्रसिद्ध्या न तत्रेदानींङ्कोपि प्रसङ्गो युज्यत इत्युच्यते तदापि वह्निमद्ध्रदपक्षकघटसाध्यकोक्ताभावहेतुकस्थले नाव्याप्तिसम्भव इति चेन्न विशेषणांशे संशयस्वीकारे ऽभावांशे वह्न्यादिसंशयात्मकह्रदोवह्निमान्नवेतिसंशयमादायासम्भवस्य सम्भवात् ॥ यद्वा संशयादीत्यत्रादिपदात् अप्रामाण्यज्ञानास्कन्दिताहार्य्ययोःसंग्रहात्तेषामसम्भवे समुच्चितानामेव हेतुत्वंविवक्षितं तथाचोक्तस्थलेऽप्रामाण्यज्ञानास्कन्दितज्ञानमादायाव्याप्तिः संशयमादायच गुणोद्रव्यमित्यत्र द्रव्यभेदवद्गुणरूपबाधविषयकस्य स्वरूपतोद्रव्यत्वद्रव्यभेदोभयकोटिकस्य गुणोद्रव्यन्नवेतिसंशयस्याप्रतिबन्धकतयाव्याप्तिर्बोध्या ॥ यद्यपि ह्रदोवह्निमान्धूमादित्यत्रापि संशयमादायाव्याप्तिः सम्भवति तथाप्यव्यापकाविषयताशून्यत्वस्य निश्चयविशेषणत्वे तदसम्भवात्तन्नोक्तमिति ॥

ज्ञानपदमनाहार्य्याप्रमाण्यज्ञानानास्कन्दितनिश्चयपरमिति इदमुपलक्षणम् । अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वमपि प्रवेश्यं नातोवह्न्यभाववद्ध्रदादावसम्भवः भ्रमत्वनिवेशाद् वृक्षः कपिसंयोगवानित्यत्र कपिसंयोगाभाववद्वृक्षे नातिव्याप्तिः

अनतिप्रसक्तत्वस्यदुर्घटत्वादिति ॥ नन्वनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयीययद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपकताकाधिकरणत्वे प्रतिबन्धकताशून्यावृत्तित्वस्य विवक्षायान्नासम्भवावकाशः विशिष्टाधिकरणताया विलक्षणत्वेनाप्रमाण्यज्ञानाद्यास्कन्दितज्ञाने विरहादितिचेन्न अधिकरणताया अधिकरणभेदेन भिन्नत्वे ह्रदादावतिव्याप्तेः ह्रदत्वावच्छिन्नतादृशविषयतात्वावच्छिन्ननिरूपकताकाधिकरणताया वह्न्यभाववान्ह्रदइतिज्ञाननिष्ठायाः प्रतिबन्धकताशून्यावृत्तित्वात् ।

यत्तु यद्रूपावच्छिन्नविषयतात्वतादृशनिश्चयीयत्वाद्यतिरिक्तधर्मा-

नवच्छिन्नतत्तद्धर्मावच्छिन्ननिरूपकताकाधिकरणतात्वं प्रतिबन्धकताशून्यज्ञाननिरूपितवृत्तितानवच्छेदकमिति विवक्षायाञ्चासम्भवो नाप्यतिव्याप्तिरिति तन्नुच्छं विशिष्टाधिकरणतात्वस्याधिकरणतात्वानतिरिक्ततया ऽसम्भवतादवस्थ्यात् तादृशाधिकरणतात्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपे तादृशवृत्तितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वनिवेशस्य तादृशाधिकरणतावद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वापेक्षयाऽतिगुरुत्वात् गौरवस्यैवच परिःकृतोपेक्षाबीजत्वेनानुसर्त्तव्यत्वात् । तादृशविषयतात्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपे प्रतिबन्धकत्वाभाववद्विशिष्टाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्यापि तादृशनिरूपकताकाधिकरणतावद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वापेक्षया गुरुत्वाच्च । नच यद्रूपावच्छिन्नत्वविषयतात्वतादृशनिश्चयित्वगतसमुदायत्वे प्रतिबन्धकत्वाभाववद्विष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वविवक्षणीयं तथाच न दोषोनापि गौरवमितिवाच्यं ह्रदत्वावच्छिन्नत्वविषयतात्वतादृशनिश्चयीयत्ववह्न्यभावत्वावच्छिन्नविषयतानिरूपितत्वगतसमुदायत्वस्यापि तादृशसमुदायत्वरूपतया तस्योक्तानवच्छेदकत्वेन ह्रदेऽतिव्याप्तेः । यद्रूपावच्छिन्नत्वादिमात्रवृत्तिसमुदायत्वस्य निवेशेच गौरवप्रसङ्गात् यद्रूपावच्छिन्नविषयितात्वस्य तादृशाधिकरणतात्वस्य वा व्यापकत्वस्य प्रतिबन्धकताशून्यावृत्तित्वे निवेशे ह्रदाद्येकदेशातिव्याप्तिवारणेपि तादृशविषयिताव्यापकत्वापेक्षया सुतरामेवगुरुत्वात्तस्यहेयत्वमवसेयम् ॥

अथ प्रतिबन्धकताशून्यावृत्तित्वं यद्रूपएव निवेश्यं संसर्गश्च स्वावच्छिन्ननिरूपितविषयितावत्वस्वृत्तितावच्छेदकोबोध्य इतिचेन्न परम्परायाः संसर्गत्वे मानाभावात् अनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टविषयितावत्वस्य संसर्गत्वे प्रतिबन्धकताशून्यस्योक्तनिश्चयात्मकत्वे वा वृक्षःकपिसंयोगवानित्य त्राव्याप्यवृत्तित्वज्ञानस्योत्तेजकतापक्षे कपिसंयोगाभाववत्कपिसंयोगवद्वृक्षत्वावच्छिन्नविषयकज्ञानस्याहार्य्यतया तादृशवृक्षत्वावच्छिन्नेऽतिव्याप्तेश्च ।

एतेनोक्तपरम्परायास्संसर्गत्वाभावेपि तादृशप्रतिबन्धकताशून्य-

निरूपितवृत्तितावद्विषयितानिरूपकतानवच्छेदकमेव निवेश्यम् । नच प्रमेयत्वावच्छिन्नवृत्तितामादाय दोषइतिवाच्यं प्रतिबन्धकत्वाभावव- न्निरूपिता या विषयितात्वावच्छिन्नवृत्तिता तन्निरूपकत्वनिष्ठावच्छे- दकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावस्यैव नि- वेश्यत्वादितिनिरस्तम् ।

अत्राव्याप्यवृत्तित्वग्रहस्यानुत्तेजकत्वपक्षे निरवच्छिन्नस्वरूपेण कपिसंयोगाभावस्यैव कपिसंयोगविरोधित्वेन तादृशसम्बन्धेन क- पिसंयोगाभावप्रकारककपिसंयोगवद्विशेष्यकज्ञानस्यैवाहार्य्यत्वात्तद्वि- षयविशिष्टस्याप्रसिद्धत्वात् शुद्धस्वरूपेण कपिसंयोगाभाववत्कपिसं- योगवद्वृक्षस्य प्रसिद्धत्वेपि तज्ज्ञानस्यानाहार्य्यतयाऽतिव्याप्तेरभावात् तत्पक्षमवलम्ब्यैव जगदीशेनानतिरिक्तवृत्तित्वं स्वव्यापकतत्कत्वरूप- त्वाभिहितमितिप्रतिभाति ।

यत्तु स्वव्यापकतत्कत्वरूपमेवानतिरिक्तवृत्तित्वं लाघवात्त- स्याप्यभिमतत्वाच्चं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित- प्रतिबन्धकत्वाभावस्यैकस्यैव यद्रूपावच्छिन्नविषयकानिश्चयवृत्ति- भेदप्रतियोगितानवच्छेदकत्वापेक्षया गुरुत्वात् तथाहि तादृश- प्रतिबन्धकत्वघटोभयाभावं तत्प्रतिबध्यतानिरूपितप्रतिबन्धकत्वा- भावं तत्प्रतिबध्यतावृत्तित्वविशिष्टव्यापकतारूपाभावं चादाय दोषमात्रेऽव्याप्त्यापत्तिरतस्तद्वारणाय प्रतिबध्यतानिरूपितत्वप्र- तिबन्धकतात्वातिरिक्तधर्मानवच्छिन्नत्वस्य प्रतियोगितायां व्या- पकत्वप्रतिबध्यतात्वातिरिक्तधर्मानवच्छिन्नत्वस्य प्रतिबध्यत्वनिष्ठ- वच्छेदकतायां व्यापकत्वनिष्ठावच्छेदकतायां तादृशप्रतियोगिता- कत्वाभावत्वातिरिक्तधर्मानवच्छिन्नत्वस्य चनिवेशोवश्यमेवकार्य्यः अ- नुमितित्वव्यापकतारूपाभावोपि न्यूनवारकेतरवारकपर्य्याप्तिसहित- एवावच्छेदकत्वेनोपादेयोन्यथाधिकरणभेदेनाभावभेदपक्षे तद्व्यक्तित्वे नोपादाने तत्प्रतिबध्यतानिष्ठस्य व्यापकतारूपाभावस्य भिन्नतया त- द्व्यक्तिमत्प्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावस्य बाधादिज्ञाने स- त्वाद्दोषमात्रे ऽव्याप्त्यापत्तेः स्वव्यापकतत्कत्वपक्षेऽप्रामाण्यज्ञाना- भावादीनामवच्छेदकतया प्रविष्टत्वेपि तेषां तद्व्यक्तित्वेनावच्छे- दकत्वेपि क्षत्यभावात् प्रतिबन्धकतावच्छेदकाभावविशिष्टान्यत्वरू- पैकाभावस्यैववा तद्व्यक्तित्वेनावच्छेदकतया प्रवेशान्न तदंशेनाधि- क्यम् तथाच स्वव्यापकतत्कत्वापेक्षया गौरवं तादृशप्रतिबन्ध

कत्वाभावविचारएव तच्छून्यावृत्तित्वेऽभिव्यक्तं किमु वक्तव्यं-वृत्तित्वाभावरूपसमुदिततद्विचारे तादृशगुरुभूतप्रतिवन्धकत्वाभा-वस्यापि तत्प्रतियोगितावच्छेदकतया प्रवेशात् । यद्विषयिताव्याप कत्वशरीरेऽनुमितित्वव्यापकत्वादीनामवच्छेदकतयाऽप्रवेशेन लाघ-वस्य व्यक्तत्वात् तत्रच यद्विषयितावद्वृत्तिभेदप्रतियोगितावच्छेदकता उभयावृत्तिधर्मातिरिक्तधर्मानवच्छिन्नत्वेनैकधर्मावच्छिन्नप्रतिवन्धक-त्वस्यैक्यपक्षे तन्निश्चयवृत्तिप्रतिवन्धकतावान्नोतिभेदमादायाव्याप्तिवा-रणाय यदा निविशते तदेदंलाघवस्वोध्यम् प्रतिवन्धकताभेदपक्षस्तु जघन्य एव। नच गौरवं दोषतयाकिमितिभट्टाचार्य्येणनोक्तमितिवाच्यं गौरवापेक्षयाऽसम्भवस्यवरिष्ठत्वात् यावन्तोदोषाः सम्भवन्तीतिन्या-यादेकस्योद्भावने क्षत्यभावात् प्रतिवन्धकताभेदपक्षेच तादृशप्रति-वध्यत्वानिष्ठनिरूपितत्वसम्वन्धावच्छिन्नावच्छेदकताभिन्नप्रतिवन्धक तात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वेन तस्या विशेष-णीयतया तदपेक्षया तच्छून्यावृत्तित्वे गौरवस्य नावकाशइति तन्न प्रतिवन्धकताभेदाभावपक्षेपि गौरवासम्भवात् प्रतिवन्धकतावृत्तित्वेन सामानाधिकरण्येन तादृशवृत्तित्वाभावप्रतियोगितावच्छेदकतद्व्यक्ति-त्वनिष्ठावच्छेदकत्वस्य प्रायशोदोषमात्रेऽव्याप्तिप्रसङ्गेनोपादानासम्भ-वेपि वृत्तित्वाभावप्रतियोगितानिरूपितपरम्परीयतव्यक्तित्वनिष्ठाव-च्छेदकतायास्तेनरूपणोपादानसम्भवेन प्रतिवध्यत्वादीनामत्राप्यवच्छे-दकत्वेनाप्रवेशात् अतएवानतिरिक्तवृत्तित्वस्य तत्रतत्रोपादित्सापि सङ्गच्छतइति ॥

शुद्धहृदत्वावच्छिन्नेऽतिप्रसङ्गाच्चेति अथ यद्रूपावच्छिन्नविषयत्वाव्या-पकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयत्व एवोक्तावृत्तित्वस्य विवक्षितत्वेन तादृशहृदत्वावच्छिन्नविषयताया हृदइतिज्ञानएव प्रतिबन्धकताशून्ये सत्वेन कथमतिव्याप्तिरिचेन्मैवम् । अत्रकल्पे स-र्वेषामेव ज्ञानविशेषणानामनाहार्य्यत्वादीनां प्रतिबन्धकताशून्य-ज्ञानविशेषणत्वेनाव्यापकविषयताशून्यत्वस्यापि तद्विशेषणत्वस्यैव विवक्षितत्वेनातिप्रसङ्गसम्भवात् ॥ किञ्चिद्रूपावच्छिन्नविषयत्वाव्या-पकविषयताशून्यत्वस्यैव सिद्धान्तत्वेन तद्वज्ज्ञानवृत्तित्वस्य यद्रूपा-वच्छिन्नविषयत्व विशेषणत्वेप्यतिव्याप्तिस्सम्भवाच्च ॥

केचित्तु संयोगपक्षकसंयोगसम्वन्धावच्छिन्नसंयोगाभावसाध्य-

कस्थले संयोगस्संयोगेन संयोगवानितिबाधभ्रमविषये संयोगेऽति-व्याप्तिः उक्तज्ञानस्य संयोगत्वावच्छिन्नविषयत्वाव्यापकविषयताशू-न्यत्वात् एवं सम्बन्धस्य स्वरूपतोभानाभ्युपगमे गुणपक्षकद्रव्यभेद-साध्यकस्थले गुणोद्रव्यमितिबाधभ्रमस्य स्वरूपतोद्रव्यत्वप्रकारक-स्य स्वरूपतस्समवायसंसर्गविषयकस्य च विषये गुणेऽतिव्याप्तिः कि-ञ्चाभावपक्षकतादात्म्येन भेदसाध्यकस्थलेऽभावत्वेनघटावगाह्यभावोभे-दभेदवानित्याकारकाभावत्ववत्स्वरूपसम्बन्धेन भेदभेदविषयकज्ञान-विषये भेदभेदवत्यतिव्याप्तिः उक्तज्ञानस्याव्यापकविषयताशून्यत्वात् अतएव यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता यद्रूपा-वच्छिन्नविषयत्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपाव च्छिन्नविषयताशून्यत्वविवक्षायामपि न प्रतीकार उक्तस्थलयोरति-व्याप्तेर्दुरुद्धरत्वाद्धृदत्वस्याभावगर्भत्वादिति ॥

अनुमितावविरोधितयाऽसम्भव इति ननु ह्रदत्वावच्छेदेनवह्नेः सा ध्यतायां ह्रदत्वसामानाधिकरण्येन वह्न्यभाववद्ध्रदेव्याप्तिसम्भवे-पि ह्रदत्वावच्छेदेन वह्न्यभाववद्ध्रदस्यापि तत्र दोषत्वेन न तत्रा-व्याप्तिसम्भवः ह्रदत्वसामानाधिकरण्येनवह्नेस्साध्यतायान्तु स एव-दोष इति स्वतरान्तत्राव्याप्त्यभाव इत्यसम्भवाभिधानमनुचितम् तथाहि स्वरूपतोह्रदत्वधर्मितावच्छेदककस्य वह्न्यभाववान्ह्रद इति ज्ञानस्यैव प्रतिबन्धकतया तत्र ह्रदत्वनिष्ठनिरवच्छिन्ननिरूपकताका-धिकरणत्वघटितह्रदत्वव्यापकत्ववद्वह्न्यभावप्रतियोगिकस्वरूपस्य भा-समानतया तद्घटितस्यैव दोषत्वेन दोषतावच्छेदकगतसमुदायत्वा वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य जाति-त्वादिनाह्रदत्वावगाहिज्ञाने विरहादुक्तविषयताकत्वस्यानतिरिक्तवृ-त्तित्वाक्षतेः लक्षणसमन्वयादितिचेन्न यद्विषयतायाः प्रतिबन्धक-तावच्छेदकत्वन्तत्तद्घटितस्यैव दोषत्वं नतु प्रतिबन्धकज्ञानविषयमात्र-घटितस्य एवञ्च निरवच्छिन्नह्रदत्वनिष्ठनिरूपकत्वघटितसंसर्गावगा-हिज्ञानत्वेन प्रतिबन्धकत्वे निरवच्छिन्नत्वादिनिष्ठसांसर्गिकविषयता-याः प्रतिबन्धकतावच्छेदकत्वापत्त्या गौरवात् लाघवेन निरवच्छिन्न-ह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकज्ञानत्वेनैव प्रतिबन्धकत्वस्वाच्य-मिति ह्रदत्वनिष्ठनिरूपकत्वघटितसंसर्गेण वह्न्यभाववद्ध्रदस्यैव दोष-तया दोषतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिका-

वच्छेदकताकविषयताकत्वस्य जातिमान्वह्न्यभाववानितिज्ञानेपि स-त्त्वेनाव्याप्तेस्सम्भवादिति ॥

यद्वा ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकत्वविशेषितस्य प्रमेय-त्वेन स्वरूपत्ववतो यत्रसंसर्गतया भानं यत्र वा स्वस्वरूपिस्वरूपेण ह्रदत्वावच्छेदेन वह्न्यभावस्यभानम्प्रकृतानुमित्यप्रतिबन्धके तत्र वह्न्यभाववान्ह्रदइत्याकारकज्ञाने तादृशस्वरूपत्वघटितदोषतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकवियताकत्वस्य सत्त्वेनाव्याप्तिसम्भवादसम्भवाभिधानन्नानुचितमिति ॥ केचित्तु वह्नित्वावच्छिन्नतद्वह्निनिष्ठप्रकारतानिरूपितह्रदत्वावच्छिन्नतद्ध्रदनिष्ठविशेष्यताकज्ञानत्वावच्छिन्नम्प्रतिवह्नित्वावच्छिन्नतद्वह्निनिष्ठवि-षयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नतद्ध्रदनिष्ठविशेष्यताकज्ञानत्वेन प्रतिबन्धकत्वपक्षे ह्रदत्वव्यापकत्वविषय-त्वादीनां प्रतिबन्धकतानवच्छेदकतया तदाश्रयघटितस्यादोषत्वेन शुद्धस्वरूपघटितदोषतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताक-पर्याप्तिकावच्छेदकताकविषयताकत्वस्य जातिमान्वह्न्यभाववानिति-ज्ञाने सत्वादव्याप्तिरितिवदन्ति ॥

यत्तु ह्रदत्वव्यापकत्वत्वस्यप्रमेयत्वेनावगाहमानं प्रमेयविशि-ष्टवद्वह्न्यभावप्रतियोगिकस्वरूपावगाहिज्ञानमादायाव्याप्तिरिति तन्न ह्रदत्वसामानाधिकरण्यभेदत्वभेदप्रतियोगित्वतत्त्वावच्छेदकत्वादिघ-टितधर्मगतसमुदायत्वस्यैव दोषतावच्छेदकगतसमुदायत्वेन तदव-च्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्योक्तज्ञाने विरहादिति ॥

पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकेति अथ किन्नाम पक्षतावच्छेदकाद्यंशेऽ-न्याप्रकारकत्वं नतावत् पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकार-ताशून्यत्वं वह्न्यभाववान्ह्रदइतिज्ञाने विरहात् ह्रदत्वे पारतन्त्र्येण व-ह्न्यभावस्य प्रकारत्वात् नच प्रकारतायां सामानाधिकरण्यसम्बन्धान-वच्छिन्नत्वन्निवेश्यं सामानाधिकरण्यसम्बन्धेन जातित्वेन प्रमेयत्वेन-वा ह्रदत्वावगाहिज्ञानस्य तथात्वापत्तेः विशेष्यत्वावच्छेद्यपक्षतावच्छेदकनिष्ठप्रकारताशून्यत्वमपि वह्न्यभाववान्ह्रदइतिज्ञानासंग्रहेण हेयम् पारन्त्रीयविषयत्वमवच्छेद्यमेव नत्ववच्छेदकमिति यदि प्रामाणिकं स्यात्स्यादपीदन्निर्दुष्टं तदेव नास्ति प्रमाणाभावात् इतिचेन्न पक्षताव

च्छेदकनिष्ठविशेष्यताविशिष्टप्रकारताशून्यत्वस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वनिरूपितत्व स्वावच्छेद्यावच्छेदकतानिरूपितविषयतानिरूपितप्रकारत्वानवच्छिन्नत्वोभयसम्बन्धेन तथाच ह्रदत्वनिष्ठविशेष्यतानिरूपितवह्न्यभावनिष्ठप्रकारतायाः तादृशप्रकारत्वानवच्छेद्यत्वविरहान्नदोषः।

यत्तु पक्षतावच्छेदकांशे इत्यत्रादिपदग्राह्यसाध्यतावच्छेदकहेतुतावच्छेदकांशयोरन्याप्रकारकत्वं नस्वातन्त्र्येण निवेश्यं किन्तूक्तनिवेशे पक्षतावच्छेदकनिष्ठत्वन्न देयं तावतैव सर्वसाधारण्यसम्भवात् ह्रदनिष्ठविशेष्यतायाः स्वावच्छेद्यावच्छेदकत्वाप्रसिद्धेः वह्निनिष्ठविशेष्यताया अभावनिष्ठविशेष्यतायाश्च स्वावच्छेद्यायाः प्रकारतावच्छेदकताया विशिष्टविषयतानिरूपितावच्छेदकतायाश्च प्रसिद्धत्वेऽपि तन्निरूपितविषयतानिरूपितप्रकारत्वाप्रसिद्धेः न वह्न्यभाववान्ह्रद इति ज्ञानासङ्ग्रहः। जातित्वेन वह्नित्वावगाहि जातिमदभाववद्ध्रदज्ञानस्य जातित्वेन वह्नित्वावगाहि धूमाभाववद्वृत्तिजातिमद्विषयकज्ञानस्य च वह्नित्वनिष्ठविशेष्यत्वावच्छेद्यावच्छेदकतानिरूपितावच्छेदकत्व विशेष्यत्वान्यतरात्मकविषयतानिरूपितवह्न्यभावप्रकारत्व तादृशवृत्तित्वप्रकारत्वान्यतरानवच्छिन्नजातित्वनिष्ठप्रकारतानिरूपकत्वेन वारणसम्भवेन साध्यतावच्छेकांशे हेतुतावच्छेदकांशेचान्याप्रकारकत्वनिवेशस्य गतार्थत्वादिति।

तन्तुच्छम् पर्वतपक्षक वह्न्यभावसाध्यकस्थले वह्निमत्पर्वतेऽव्याप्त्यापत्तेः जातित्वेन वह्नित्वावगाहिजातिमद्वान्पर्वत इति ज्ञानस्य वारणासम्भवात् न च पृथक्तया साध्यतावच्छेदकांशेन्याप्रकारकत्वनिवेशेपि कागतिः वह्नित्वस्य साध्यतावच्छेदकघटकत्वेन साध्यतावच्छेदकत्वेपि स्वावच्छेद्यावच्छेदकताकविषयतानिरूपितप्रकारत्वस्याप्रसिद्धत्वेन जातित्वनिष्ठप्रकारताया साध्यतावच्छेदकनिष्ठविशेष्यताविशिष्टत्वासम्भवात् तार्णवह्निसाध्यकस्थले तार्णवह्न्यभाववान्ह्रदइति ज्ञानस्य धर्मिपारतन्त्र्येण वह्नित्वांशे तार्णत्वावगाहिनः साध्यतावेच्छदकांशेऽन्याप्रकारकत्वसम्पत्तये वैशिष्ट्यघटकतया स्वावच्छेद्येत्यादिसंसर्गस्योपादेयत्वादिति वाच्यं स्वावच्छेद्यावच्छेदकतानिरूपितविषयतानिरूपितविषयत्वानवच्छेद्यत्वस्यैव संसर्गतया प्रवेशात् स्वावच्छेद्यावच्छेदकतानिरूपितप्रकारतानि-

रूपितसांसर्गिकविषयत्वस्य प्रसिद्धत्वेन जातिमत्त्वात् पर्वत इति ज्ञानवा·
रण सम्भवात् न च साधारणनिवेशपक्षेऽपि स पर्वतस्तु संसर्ग इति वाच्यं
वह्न्यभाववान्ह्रद इति ज्ञानस्यापि सङ्ग्रहस्य दुश्शकत्वात् वह्निनिष्ठ·
विशेष्यत्वावच्छेद्यावच्छेदकतानिरूपितप्रकारतानिरूपितसांसर्गिक·
विषयत्वस्य प्रसिद्धत्वात्॥ नचैवं प्रमेयत्वादिना स्वरूपत्वावगाहि ज्ञा·
नस्यावारणं विशेषपक्षे, सामान्यपक्षे च प्रकारतास्थाने विशेषणता·
निवेशेन तद्वारणस्यापि सम्भव इति वाच्यं समवायादिनिष्ठविशेष्य·
तायानिरूपितत्वस्य तदवच्छेद्यावच्छेदकतानिरूपितवह्नित्वादिनिष्ठा·
वच्छेदकतानिरूपितप्रकारत्वानवच्छिन्नत्वस्य च समवायत्वादिनिष्ठ·
विशेषणतायां सत्वेन तच्छून्यत्वस्य वह्न्यभाववद्ध्रदादिज्ञाने विरहेण
प्रायशो दोषविषयकज्ञानमात्रस्यैवासङ्ग्रहापत्त्या प्रकारत्वस्यैव विव·
क्षणीयतयोक्तज्ञानावारणस्य तुल्यत्वादतस्तद्दोषानुपादानस्य दोष·
विषयकज्ञानासङ्ग्रहेण दोषापेक्षया दुर्बलत्वात्तद्दोषस्येति भट्टाचार्येण
तदुपेक्षाकृतेत्येतस्यैव भवतापि वाच्यतया प्रमेयत्वादिना स्वरूपाव·
गाहिज्ञानमादाय दोषस्येष्टत्वात् यत्र साध्यतावच्छेदकपक्षतावच्छे·
दकहेतुतावच्छेदकादीनां स्वरूपतो दोषघटकत्वं तत्र किञ्चित्प्रकारेण
तद्विषयकज्ञानमादाय दोषस्यैवानिष्टत्वात् एवं साधारणनिवेशपक्षे
व्यभिचारमात्रासङ्ग्रहरूपदोषसत्वे स्थलविशेषे कस्यचिद्दोषस्या·
सङ्ग्रहप्रदर्शनेन न्यूनतास्यात्। तस्माद्विशिष्यनिवेशपक्षकार्यं इति॥

ननु पक्षतावच्छेदकत्वाभाववन्निष्ठत्वं, पक्षतावच्छेदकनिष्ठविशे·
ष्यताविशिष्टप्रकारतायां निवेश्यमभावश्चावच्छेदकत्वसम्बन्धावच्छिन्न·
प्रतियोगिताकोबाध्यः तथाच जलवद्ध्रदो वह्निमानित्यत्र दोषाभा·
वादाह।

अविशेषितधर्मावच्छिन्नपक्षकेति । येन रूपेण पक्षतावच्छेद·
कस्य दोषघटकत्वं तद्रूपानवच्छिन्नधर्मावच्छिन्नपक्षकेत्यर्थः नतु नि·
रवच्छिन्नपक्षतावच्छेदकताकेत्यर्थः तथासति ह्रदत्वाश्रयो वह्निमाञ्ज्ञा·
तेरित्यत्रापि दोषसम्भवे तदुपेक्षाया निर्बीजत्वापत्तेः नव्योक्तनिवेशे
प्रमेयस्य पक्षतावच्छेदकतावच्छेदकतास्थले पक्षतावच्छेदकत्वाभा·
वाप्रसिद्ध्याव्याप्तिसम्भवे तावद्दुरनुधावनमयुक्तमिति वाच्यं स्वा·
वच्छेदकीभूतधर्मावच्छिन्नान्यत्वविशिष्टनिरवच्छिन्नत्वएतदन्यतरसम्ब·
न्धेन स्वनिरूपितावच्छेदकतात्वसम्बन्धावच्छिन्नप्रतियोगिताकप·

क्षतावच्छेदकत्वाभावस्यप्रकारतायामेव विशेषणत्वात् नच हेतुता-वच्छेदकत्वाभावत्वादिकमप्युक्तप्रकारताविशेषणमस्त्वविशेषितधर्मावच्छिन्नपक्षकस्थलेऽपि न दोष इति वाच्यं ह्रदोवह्निमाञ्जातिमत इत्यत्र जातिमान् वह्न्यभाववानिति ज्ञानमादायाव्याप्तेर्दुरुद्धत्वात् ॥

अथ प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यप्रकारताशून्यत्वस्विवक्षणीयम् वैशिष्ट्यञ्च स्वतादात्म्य स्वावच्छेद्यत्वा-न्यतरसम्बन्धेन तथाच न कोपिदोषः वह्न्यभावत्वावच्छिन्नप्रकारतायाः प्रतिबन्धकतावच्छेदकविषयत्वानवच्छेद्यत्वेपि ह्रदत्वनिष्ठप्रकारतायाः प्रतिबन्धकतावच्छेदकह्रदत्वनिष्ठावच्छेदकतातादात्म्याभावेपि च व-ह्न्यभाववान्ह्रद इत्यादिज्ञानानामसङ्ग्रह इति चेन्न यद्यपि सामानाधिक-रण्येन वह्न्यभाववद्ध्रदविषयकस्य जातिमान् वह्न्यभाववानिति ज्ञा-नस्य ज्ञानविशिष्टत्वेनाप्यप्रतिबन्धकतया तदीयविषयता न प्रतिब-न्धकतावच्छेदिका तथापि ह्रदत्वावच्छेदेन वह्न्यभाववद्ध्रदत्वाव-च्छिन्नविषयकस्य जातिमान् वह्न्यभाववानितिज्ञानस्य जातिमान्ह्रद-इतिज्ञानविशिष्टत्वेन प्रतिबन्धकतयां जातित्वावच्छिन्नविषयता जाति-त्वादिविषयतापि प्रतिबन्धकतावच्छेदिकैवेत्यव्याप्तितादवस्थ्यात् ॥ अथ विशेष्यदलघटकप्रतिबन्धकतैतद्विशेषणघटकप्रतिबन्धकतयोरै-क्यस्विवक्षणीयम् तथासति प्रकृतानुमितिप्रतिबन्धकताविशिष्टनि-ष्ठयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनि-रूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छे-दकतावद्रूपवत्वं लक्षणम् वैशिष्ट्यञ्च स्ववृत्तिव्यापकतारूपाभावी-यप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनि-ष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्व स्वावच्छे-दकविषयताविशिष्टान्यप्रकारताशून्यत्वनिष्ठावच्छेदकतानिरूपितत्वो-भयसम्बन्धेनेति चेन्न वह्न्यभाववद्वह्न्यभाववद्ध्रदे कथञ्चिदतिव्या-प्तिवारणाय विशिष्टान्तराघटितत्वस्य वक्ष्यमाणस्य वह्न्यभाववज्जल-वत्कालीनह्रदोवह्निमानित्यत्र जलवत्ताद्दशह्रदेऽतिव्याप्तिवारणाय वि-शिष्टद्वयाघटितत्वस्य सार्थक्यसम्भवात् तन्निवेशे परिष्कृते यथाना-यन्दोषस्तथाव्यक्तीभविष्यत्युपरिष्टात् तथासति लाघवानवकाशात् । यत्रदोषविषयकज्ञानस्य प्रतिबन्धकतानवच्छेदकविषयताकत्वनियमः तत्राव्याप्त्यापत्तेश्च वक्ष्यमाणाव्यापकाविषयताशून्यत्वानिवेशेचैतद्दो-

षाभावादिति ॥

तादृशविशिष्टाघटकपदार्थाविषयकत्वस्येति तथासति प्रकृतलक्षणनिवेशश्च-यद्रूपविशिष्टनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावः प्रतिबन्धकत्वेऽस्ति तद्रूपावच्छिन्नवत्वं वैशिष्ट्यञ्च स्वावच्छिन्ननिरूपितविषयित्व स्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वाभाववन्निष्ठविषयताशून्यत्वोभयसम्बन्धेनेति ॥

यद्यद्रूपावच्छिन्नस्य यस्ययस्येत्यादि सर्व्वं गगनवद्वाच्यत्वादित्यादौ पूर्ववद्दोषवारणाय यद्यद्रूपावच्छिन्नेति तथाच सर्वत्वावच्छिन्नानामेव घटादीनां दोषघटकतया तद्रूपावच्छिन्नविषयताभेदस्य घटत्वावच्छिन्नविषयतायां सत्वान्नदोषः। ह्रदपक्षकजातित्ववद्ध्रदत्वकालीनवह्निसाध्यकस्थले तादृशवह्न्यभाववद्ध्रदत्वावच्छिन्नघटकत्वस्य जातित्वावच्छिन्नेसत्वेन तदवच्छिन्नविषयताभेदस्य जातित्वेन ह्रदत्वावगाहिजातिमान्तादृशवह्न्यभाववानिति ज्ञानीयजातित्वावच्छिन्नह्रदत्वनिष्ठविषयतायाम्विरहादव्याप्त्यापत्तिरतोयस्य यस्येति तत्तद्रूपावच्छिन्नविषयताभेदस्य निरवच्छिन्नविषयतायां सत्वेन तच्छून्यत्वस्य दोषविषयकज्ञाने विरहादसम्भवः स्यादतउक्तं किञ्चिदवच्छिन्नेति तत्कल्पेति लक्षणार्थः पूर्ववदेवबोध्यः वैशिष्ट्यघटकसम्बन्धयोर्मध्ये द्वितीयश्च सम्बन्धः स्वावच्छिन्नावच्छेदकताकप्रतियोगितानिरूपितावच्छेदकताविशिष्टान्यकिञ्चिदवच्छिन्नविषयताशून्यत्वरूपः वैशिष्ट्यञ्च स्वावच्छेदकीभूतधर्मावच्छिन्नत्व स्वसामानाधिकरण्योभयसम्बन्धेन।

यत्तु स्वावच्छिन्नविषयितासमानाधिकरणभेदप्रतियोगितानिरूपितविषयतानिष्ठावच्छेदकताविशिष्टान्यविषयताभिन्नाकिञ्चिदवच्छिन्नविषयताशून्यत्वंसम्बन्धः वैशिष्ट्यञ्च स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नत्व स्वनिरूपिताधेयत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावन्निष्ठत्वोभयसम्बन्धेनेति तत्तुच्छं चालनीन्यायेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाधिकरणे ह्रदत्वेन तद्ध्रदावगाहिज्ञाने ह्रदत्वावच्छिन्नैतद्ध्रदनिष्ठविषयताकत्ववान्नेतिभेदस्य तादृशविषयित्वाधिकरणएतद्ध्रदविषयकज्ञाने ह्रदत्वावच्छिन्नतद्ध्रदनिष्ठविषयतावान्नेतिभेदस्य च सत्वेन ह्रदत्वावच्छिन्नह्रदत्वनिष्ठविषयत्वस्य तादृशावच्छेदकताविशिष्टान्यभिन्नत्वात्तच्छून्यत्व-

स्य वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताकज्ञाने विरहादव्याप्त्यापत्तेः। नच ह्रदत्वावच्छिन्नानुयोगिताकसमुदायत्वावच्छिन्नानुयोगिकस्वरूपघटितसामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वस्यैव दोषतावच्छेदकतया तद्रूपावच्छिन्नविषयकत्वस्य ह्रदत्वेन निखिलह्रदावगाहिज्ञाने एव सत्वान्न दोषइति वाच्यं ह्रदत्वसामानाधिकरण्येन वह्न्यभाववद्ध्रदस्यापि दोषतया तत्रोक्तसामानाधिकरण्येन वह्न्यभावविशिष्टह्रदत्वस्य दोषतानवच्छेदकत्वात् पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतस्य दोषत्वेन तत्रोक्तरीत्या वह्न्यभावविशिष्टपर्वतत्वस्याप्रसिद्धत्वात्तत्राव्याप्तेर्दुरुद्धरत्वादिति।

अत्रच येन सम्बन्धेन यद्रूपावच्छिन्नस्येति वक्तव्यमन्यथासम्बन्धान्तरेण जातित्वाविशिष्टह्रदत्वस्य दोषघटकत्वे स्वरूपेण जातित्वेन ह्रदत्वावगाहिजातिमाञ्जातित्ववद्ध्रदत्वकालिनवह्न्यभाववानिति ज्ञानवारणासम्भवादितिध्येयम् ॥ ० ॥

तथासति ह्रदोजात्यभावेति। अथ प्रतियोगितावच्छेदकताविशिष्टान्यत्वघटकवैशिष्ट्यघटकस्वावच्छेदकावच्छिन्नत्व स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वरूपं वाच्यं तथाच ह्रदपक्षकजात्यभावसाध्यकस्थले जातिमद्ध्रदत्वावच्छिन्नावच्छेदकताकप्रतियोगितानिरूपितावच्छेदकताविशिष्टान्यत्वस्य जातिमज्जातिमत्वावच्छिन्नविषयतायां सत्वान्नाव्याप्तिः जातिमद्ध्रदत्वगतसमुदायत्वस्य जातिमज्जातिमत्वगतसमुदायत्वस्य चपरस्परभेदस्य स्वीकरणीयत्वात् अन्यथा वक्ष्यमाणाव्यापकविषयताशून्यत्वनिवेशव्यप्रतीकारादितिचेन्न यत्र बाधज्ञानमवश्यं पदार्थान्तरसम्बद्धबाधविषयकमेवजातं तत्रोक्त विषयताया एव बाधज्ञाने सत्वेनाव्याप्त्यापत्तेः। यद्रूपावच्छिन्नावच्छेदकतेत्यस्यापि यादृशसमुदायत्ववृत्यवच्छेदकत्वार्थकत्वस्य जातिमज्जातिमत्वावच्छिन्नावच्छेदकतावारणाय वक्तव्यतया पदार्थान्तरविशेषितबाधत्वावच्छिन्नावच्छेदकताया लक्ष्यतावच्छेदकगतसमुदायत्ववृत्तित्वविरहात् तथाविधावच्छेदकताविशिष्टान्यत्वस्योक्तज्ञानीयविषयतायां सत्वात्। न च तत्र पदार्थान्तरघटितबाधस्य विशिष्टान्तराघटितत्वेनापि न वारणमितिवाच्यं यत्र पदार्थान्तराविशेषितबाधज्ञानमप्रामाण्यज्ञानास्कन्दितमेव तद्विशेषितबाधज्ञानञ्च न तथा-

तत्राव्याप्तेरेवैतस्य परित्याज्यत्वात् पदार्थान्तरघटितेऽतिप्रसङ्गाभावेन तादृशस्थलाङ्गीकारे क्षत्यभावात् नच वक्ष्यमाणकल्पे कागतिरिति-वाच्यम अप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टस्त्राव-च्छिन्नविषयत्वाव्यापकत्वस्य तत्र निवेशेन दोषाभावात् ॥

वस्तुतस्तु बाधज्ञानङ्कदाचिद्घटकालीनत्वाविशेषितबाधविषय-कं मठविषयकञ्च कदाचित् पटकालीनत्वविशेषितबाधविषयकं मठ विषयकञ्च तत्राव्याप्तिरत्रबोध्या सिद्धान्ते च किञ्चिद्रूपावच्छिन्न-विषयत्वाव्यापकविषयताशून्यत्वानिवेशस्यावश्यकतया नदोषः घट-कालीनबाधत्वावच्छिन्नाविषयकपटकालीबाधत्वावच्छिन्नाविषयकप्र-तीतिविषयतावच्छेदकबाधत्वस्यलब्धाबादतिव्याप्तेरपि न सम्भवः ।

अतएव किञ्चिद्रूपावच्छिन्नावच्छेदकताकप्रतियोगितावच्छेदक-ताविशिष्टान्यविषयताशून्यत्वस्य ज्ञाने प्रागुक्तविषयताशून्यज्ञानीय-त्वस्य वा विषयतायां निवेशे पूर्वोक्तस्थले दोषाभावात्कथमेतत्परि-त्यक्तमितिनिरस्तम् उक्तस्थले दोषस्य वारणासम्भवात् ॥ एतेन या-दृशसमुदायत्ववृत्तिविषयताकत्वमेव लक्षणघटकं नतु यादृशसमुदा-यत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वं तथाच वह्न्यभाव वाञ्जातिमानेतज्ज्ञानियविषयत्वस्य जातित्वघटितवह्न्यभाववद्ह्रदत्वस मुदायत्ववृत्तितया दोषासम्भवेनैतद्वक्ष्यमाणाव्यपकविषयताशून्यत्वम-पि च न निवेश्यमितिपरास्तम प्रागुक्तस्थलयोरव्याप्तेर्दुरुद्धरत्वात् ।

यद्वा यद्घटविषयकं ज्ञानं बाधविषयकं पृथक्चेदप्रामाण्यज्ञाना-स्कन्दितन्दत्रघटेऽतिव्याप्तिरतोवक्ष्यमाणाव्यापकविषयताशून्यत्वनि-वेशइति ।

नैवंयद्रूपावच्छिन्नविषयतात्वमिति यन्निष्ठविषयतात्वमित्युक्तौ सर्व-ङ्गगनवद्वाच्यत्वादित्यत्रबाधविषयितासमानाधिकरणाभावप्रतियो-गितावच्छेदकयन्निष्ठविषयतात्वस्याप्रसिद्धेरव्याप्तिरतो यद्रूपावच्छि-न्नेति यद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकेत्यर्थः अन्यथा ह्रदोजात्यभाववानित्यत्रजातिमज्जातिमत्वस्य जातिमत्वानतिरिक्तत-या तद्रूपावच्छिन्नविषयत्वस्य जातिमान् ह्रदइतिज्ञानेपि सत्तया यद्रूपपदेन जातिमज्जातिमत्वस्यापादातुमशक्यतया जातिमद्ध्रदेऽ-व्याप्तेर्दुरुद्धरत्वात । अत्र यद्रूपविशिष्टनिश्चयवृत्तिभेदप्रतियोगिताव-च्छेदकत्वन्नास्तीतिप्रतीतिसिद्धोः यः प्रतिवन्धकतावृत्यभावस्तद्वी-

यप्रतियोगितानिरूपितपरस्परावच्छेदकतावद्रूपवत्त्वं लक्षणमित्येकयद्रूपमध्ये वह्न्यभाववद्ध्रदत्वगतसमुदायत्वमपरयद्रूपमध्ये वह्न्यभाववज्जातिमत्त्वगतसमुदायत्वमादाय नासम्भवतादवस्थ्यम् वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्व तादृशविषयताकत्वसमानाधिकरणाभावीयधर्मत्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानुयोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितपर्य्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नविषयतात्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकत्वानिरूपितविषयतात्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वानिष्ठावच्छेदकतानिरूपितपर्य्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगित्वानिष्ठावच्छेदकतानिरूपितावच्छेदकता निष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानुयोगित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तन्निष्ठावच्छेदकतानिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वोभयसम्बन्धेन तथाच वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकतज्ज्ञानवृत्तित्वविशिष्टविषयत्वाभावस्य तत्क्षणवृत्तित्वविशिष्टतादृशसमुदायत्वनिष्ठावच्छेदकत्वादिघटितविषयत्वाभावानां च वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतासमानाधिकरणत्वेपि वह्न्यभाववज्जातिमत्त्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकतज्ज्ञानवृत्तित्वविशिष्टविषयत्वाभावतत्क्षणवृत्तित्वविशिष्टतादृशसमुदायत्वनिष्ठावच्छेदकत्वघटितविषयत्वाभावानाञ्च जातिमान्वह्न्यभाववानिति ज्ञाने सत्त्वेपि च नासम्भवः अधिकञ्चात्रावच्छेदकलक्षणविवेचितरीतिमनुसृत्योह्यं प्रतिबन्धकतावृत्त्यभावश्च तत्तत्पदार्थनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावत्वेनैव निवेश्यो नतु तत्पदार्थनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेनापि लक्ष्यतावच्छेदकगतरूपे तादृशाभावप्रतियोगितावच्छेदकत्वप्राप्तये तत्तद-

वच्छेदकत्वनिरूपितत्वस्य निवेश्यतया गौरवात् ।

अथैवमपि अभात्वेनह्रदत्वावगाहिवह्न्यभाववानभाववानितिज्ञाने ह्रदांशे ह्रदत्वस्य भासमानतया वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयत्वस्य सत्वेन तत्राव्यापकविषयताशून्यत्वस्य च सत्वेनासम्भवतादवस्थ्यमितिचेदत्रकेचित् भ्रमत्वशून्यत्वस्य निवेशे यद्यपि यथार्थत्वघटितत्वं तथापि तत्प्रथमलक्षणे भ्रमसामान्यभिन्नत्वरूपम् अत्रच प्रकारेप्रकारतावच्छेदके विशेष्यतावच्छेदकेच भ्रमत्वस्याभावरूपमिति नक्षतिः तन्निवेशश्चावच्छेदकताविशिष्टविषयताशून्यत्वेन बोध्यः वैशिष्ट्यञ्च स्वनिरूपितत्व स्वविशिष्टप्रतियोगिताकाभाववन्निष्ठत्वोभयसम्बन्धेन वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छिन्नत्वोभयसम्बन्धेन एवञ्च घटोनद्रव्यमित्यत्र घटोद्रव्यमितिज्ञानविषयीभूतद्रव्यत्ववद्घटरूपबाधतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य घटत्वेनद्रव्यत्वावगाहिघटवान्घटइतिज्ञाने वह्निमत्पर्वतत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य पर्वतत्वेनवह्नित्वावगाहिपर्वतवह्निमान्पर्वतइतिज्ञानेच सत्त्वेपि न तत्तत्स्थलेऽव्याप्तिः वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे विषयताविशिष्टावच्छेदकताकत्वशून्यत्वमेव तद्वैशिष्टञ्च स्वनिरूपितत्व स्वाश्रयनिष्ठसंबन्धितानिरूपितनिरूपकताविशिष्टान्यत्वोभयसम्बन्धेन वैशिष्ट्यञ्च प्रसिद्धचतुष्टयेषु यावदादेयन्तावद्भिस्सम्बन्धैरितिवदन्ति

वस्तुतस्तु वह्न्यभाववज्जातिमन्तञ्जानामीत्यनुव्यवसायस्याभ्रान्ततानाञ्जायमानत्वेन वह्न्यभावजात्युभयावच्छिन्नविशिष्टविषयता जातिमान् वह्न्यभाववानितिज्ञाने स्वीक्रियते वह्न्यभाववानभाववानिति भ्रमस्प्रमात्वेन जानत एवच वह्न्यभाववदभाववन्तञ्जानामीत्यनुव्यवसायान्न तत्र विशिष्टविषयतास्वीक्रियते भ्रान्तबुद्धेर्विषयासाधकत्वात् तत्स्वीकारेपिवा, न सा विषयता ह्रदत्वांशेभासमानाभावत्वेन नावच्छिद्यते इतिवक्तुंशक्यते तथाचतज्ज्ञाने वह्निवह्नित्वाभावत्वस्वरूपह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताया एवाभावोभावेपि वा तदव्यापकत्वस्य वह्नित्ववह्न्यभाव वाभावस्वरूपाभावत्वह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतायां सत्वेन तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्य्या

स्तिकावच्छेदकताकविषयताया। अपि भाव इति यद्रूपावच्छिन्नविषयताकत्वस्य तादृशविषयताविरहस्य वा तज्ज्ञानेऽभावान्नाऽव्याप्तिः उक्तसमुदायत्वयोरपेक्षाबुद्धिविशेषविषयतारूपतया तार्णवह्नित्वगतद्वित्ववह्नितार्णत्वगतद्वित्वयोरिव परस्परम्भेदस्यानिवार्य्यत्वादिति ध्येयम् ॥

ननु जात्यवच्छेदेन वह्निःसाध्यतास्थले वह्न्यभाववज्जातिमद्रूपबाधेऽव्याप्तिः वह्निवह्नित्वाभावाभावत्वस्वरूपजातिजातित्वगतसमुदायत्वस्यैव यद्रूपपदेनोपादेयतया तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य जातित्वेन ह्रदत्वादितत्तज्जात्यवगाहिज्ञानेऽपि सत्वेन चालनीन्यायेन वह्निवह्नित्वाभावाभावत्वह्रदत्वादिगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वाभावस्य तत्समानाधिकरणतया कस्यापि दोषविषयकज्ञानस्याव्यापकविषयताशून्यत्वविरहात् । नच वह्न्यभाववद्वृत्तिजातिमात्रस्यैव दोषघटकतया तादृशनिखिलजातिघटितसमुदायपर्य्याप्तसमुदायत्वस्यैव दोषतावच्छेदकगतसमुदायत्वरूपतया यद्रूपपदेनोपादेयत्वान्नोक्तरीत्याऽव्याप्तिसम्भव इति वाच्यं प्रतिबन्धकप्रमाविषयस्य प्रतिबन्धकतानुपयुक्तपदार्थाघटितस्य विशिष्टमात्रस्यैव दोषतया जातित्वेन तत्तज्जात्यवगाह्यनेकप्रमाविषयतज्जातिघटितानेकविशिष्टस्यापि बाधत्वेन तेषां सर्व्वेषां वह्न्यभाववज्जातिमत्वेनैकरूपेणैव बाधताया अनुभवसिद्धत्वात् । तद्घटकतत्तत्पदार्थधर्मिकैकत्वप्रकारकस्य जातित्वेनानुगतीकृतजातिधर्मिकैकत्वप्रकारकस्य एका जातिरित्याकारकस्यैकस्यापि ज्ञानस्यापेक्षाबुद्धित्वेन तद्विशेषविषयत्वरूपसमुदायत्वस्य प्रातिस्विकरूपेण समुदायरूपेणच निखिलजातिपर्य्याप्तस्यैकस्यैव यत्पदेनोपादेयत्वात् तस्यच जातित्वेनानेकजातिविषयकज्ञानीयविशिष्टविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वमिव जातित्वेन तत्तज्जात्यवगाहिज्ञानीयविशिष्टविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वमपि स्वीक्रियते यथा घटत्वेनानुगतीकृतघटविशेष्यकस्यैकोघटइत्याकारकस्य घटान्यप्रमेयत्वेनानुगतघटान्यप्रमेयविशेष्यकस्यैकोघटान्यप्रमेयइत्याकारकस्य चैकस्यापेक्षाज्ञानस्य विषयत्वलक्षणं द्वित्वं बहुपदार्थवृत्ति प्रातिस्विकरूपेण तत्तदुभयपदार्थपर्य्याप्तद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वेन स्वीक्रियतइति दोषस्य दुर्वारत्वात ॥ यदिच बहुपदार्थवृत्तिद्वित्वादिकं नस्वी-

क्रियते घटघटान्यप्रमेयोभयत्वादिकञ्च घटघटान्यप्रमेयवृत्तिद्वित्वत्वे-नानुगतीकृतमेवैक्यव्यवहारंलभते अपेक्षाबुद्धिश्चेदन्त्वावच्छिन्नविशे-ष्यिकैवेति स्वीक्रियते तदा तत्तज्जातिघटितदोषतावच्छेदकगतसमु-दायत्वस्यैव यत्पदेनोपादेयतया नाव्याप्तिसम्भवः। परन्त्वपेक्षाबुद्धे-रिदन्त्वावच्छिन्नमात्रविशेष्यकत्वे द्वेद्रव्ये द्वइमेद्रव्ये द्वेइमे इतिप्रत्ययाणां सामग्रीवैलक्षण्यं नस्यात तथासति इदन्त्वविशिष्टद्रव्यत्वावच्छिन्नवि-षयकज्ञान इदमेकमिदञ्चैकमितिज्ञानादुक्तानां प्रत्ययाणामापत्तिःस्यात् तस्मादपेक्षाबुद्धेर्वैलक्षण्यमङ्गीकार्यमिति यदा घटजातीयमेकं प्रति सन्धत्ते पटजातीयञ्चैकन्तदोत्पन्नन्द्वित्वं तत्तद्घटतत्तत्पटगतानेकद्वि-त्वावच्छेदेनानेकघटपटपर्य्याप्तमेव भवति यत्किञ्चिदुभयमात्रवृत्तित्वे विनिगमकाभावादित्ययमेव पक्षःसमुचित इव प्रतिभाति एवं संख्या-रूपाणान्द्वित्वादीनाम्पदार्थद्वयादिवृत्तित्वनियमेप्यपेक्षाबुद्धिरूपाणा न्तथात्वस्य वक्तुमशक्यतया प्रकृते जात्यादिसाधारणसमुदायत्व-स्यैवोपादेयत्वेन जातित्वेनानुगततत्तद्व्यक्तिवृत्तित्वं सम्भवति भवति-चैवस्वाधस्यैकरूपत्वमपीतिचेत् यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्या-पकविषयिताशून्यत्वमेव निविशतां यद्रूपावच्छिन्नविषयकज्ञाने तथा-चैकजातिघटितरूपमादाय लक्षणगमनसम्भवादितिविभावनीयम् ।

अत्र धर्मत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेद-कताभिन्नविषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्र-तियोगिताकाभावा यद्रूपावच्छिन्नविषयितासमानाधिकरणास्तादृशा-भावकूटवत्वनिवेशेनापि यद्यपि जातिमान् वह्न्यभाववानितिज्ञानस्य ह्रदोवह्निमानित्यादिस्थलीयबाधविषयकस्य वारणं सम्भवति तथा-प्यव्यापकविषयताशून्यत्वनिवेशे कूटत्वेनाभावानिवेशेनस्विनापि ग-तिसम्भवेन लाघवात्तदुपेक्षाकृतेतिबोध्यम् ॥ ० ॥

अथ यद्रूपावच्छिन्नविषयितायामव्यापकत्वन्न यद्रूपावच्छिन्नविष-यितायां निवेश्यमपितु यद्रूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकता-वच्छेदकविषयितायाः तथा सति विशिष्टान्तराघटितत्वविशिष्टद्वया-घटितत्वयोरपिप्रवेशो नप्रयोजनम् मेयत्वविशिष्टव्यभिचारत्वावच्छि-न्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकशुद्धव्यभिचारत्वावच्छि-न्नविषयित्वाव्यापकमेयत्वावच्छिन्नविषयिताशून्यत्वस्य मेयत्वविशि-ष्टव्यभिचारज्ञाने विरहेण तत्रातिव्याप्त्यभावात् वह्न्यभाववज्जलादिम-

वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकवह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकवह्न्यभाववज्जलवद्वृत्तित्वाद्यवच्छिन्नविषयिताशून्यत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकज्ञाने विरहेण तत्रापि चातिव्याप्तिविरहात् ।

यत्तु वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वसामान्यस्यैव वह्न्यभाववान्धूमाभाववानित्याकारकनिश्चयविशिष्टवह्न्यभाववान्ह्रद इत्याकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकतया तादृशविषयित्वसामान्यावच्छिन्नप्रतिबन्धकतावच्छेदकधूमाभाववद्वह्न्यभावत्वावच्छिन्नविषयित्वाव्यापकवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशून्यत्वस्य वाधज्ञाने विरहेणाव्याप्तेर्नान्तरेणानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं तादृशविषयित्वसामान्यावच्छिन्नत्वनिवेशेऽपि वारणमिति तन्निवेशनीयं तथाच व्यभिचारघटितवाधेऽव्याप्तिः व्यभिचारप्रतिबन्धकताया अपि तादृशवाधविषयित्वावच्छिन्नतया तदवच्छेदकव्यभिचारविषयित्वाव्यापकत्वस्य वाधविषयितायां सत्त्वात् । नच वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयित्वावच्छिन्नासाधारण्यप्रतिबन्धकतावच्छेदकजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकत्वस्यासाधारण्यविषयतायां सत्त्वेनाव्याप्त्या द्वितीयावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपताया वाच्यतया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय दर्शितवाधाव्याप्तेरप्रसक्तेः प्रथमावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपतायां प्रयोजनाभावेन व्यभिचारघटितवाधविषयिताया व्यभिचारप्रतिबन्धकतानवच्छेदकतया नाव्याप्तिरिति वाच्यं विशेषगुणवद्घटरूपाश्रयासिद्धौ वाधघटितायामव्याप्तेर्दुरुद्धरत्वात् असिद्धिविषयितायां गुणवद्घटत्वावच्छिन्नविषयतात्वेन वाधप्रतिबन्धकतायामवच्छेदकत्वेन तदवच्छेदकविषयित्वाव्यापकत्वस्याश्रयासिद्धिविषयितायां सत्त्वादिति

तत्तुच्छम् स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वस्य विवक्षिततयाश्रयासिद्धिप्रतिबन्धकत्वे वाधविषयताया अनवच्छेदकत्वादाश्रयासिद्धिविषयिताया एव तादृशप्रतिबन्धकतासामान्यावच्छेदकत्वेन दोषाभावात् । नच वाधविशिष्टव्यभिचारेऽतिप्रसङ्गः तद्विषयित्वावच्छिन्नत्वस्य व्यभिचारप्रतिबन्धकतायामेव सत्त्वेन तादृशप्रतिबन्धकतासामान्यावच्छेदकव्यभिचारविषयित्वाव्या

पक्षत्वादुक्तविशिष्टविषयितायाः।

यद्वा यत्किञ्चित्प्रतिबन्धकतात्वेन निवेशः कार्य्यस्तत्रापि न कोऽपि दोषो न गौरवमितिचेन्मैवम्

सर्वं गगनवद्वाच्यत्वादित्यत्र गगनाभाववद्घटपटादीनास्वाच्यत्वेन तत्राव्याप्त्यापत्तेः सर्वासाम्बाधबुद्धीनाङ्गगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकविषयित्वाव्यापकत्वस्य निखिलबाधविषयितायां सत्वात् न चाप्रमाण्यज्ञानोत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदएव न्याय्यइतिवाच्यं सिद्धाविच्छावदप्रामाण्यज्ञानस्यापि बाधज्ञाने यादृशयादृशाप्रामाण्यग्रहसत्वे बाधनिश्चयसत्वे सर्वधर्मिकगगनप्रकारकबुद्ध्युत्पत्तिस्तत्तद्व्यक्तित्वेनोत्तेजकत्वे कथञ्चिदेकप्रतिबन्धकताया अपि सम्भवात् यद्रूपावच्छिन्नविषयित्वाव्यापकत्वघटितलक्षणस्योभयपक्षनिर्दुष्टत्वेनाभ्यर्हितत्वात्॥ नच तादृशप्रतिबन्धकतावच्छेदकविषयित्वे यद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वान्निवेश्यञ्चोक्तदोषइतिवाच्यम् वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तेः जलवद्ध्रदत्वाद्यवच्छिन्नविषयितायाः प्रतिबन्धकतानवच्छेदकत्वात् वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वावच्छिन्नविषयितायाश्च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वविरहात् नच विशिष्टद्वयाघटितत्वन्निवेश्यं विशिष्टान्तराघटितत्वानिवेशाच्च लाघवमितिवाच्यमेतस्याबोधविजृम्भितत्वात् वस्तुत आलोचने विशिष्टान्तराघटितत्वनिवेशापेक्षयात्रैव गौरवस्य पर्य्यवसन्नत्वात् प्रतिबन्धकतासामान्यनिवेशपक्षे वह्निर्धूमवान्वह्नेरित्यत्र धूमाभाववद्धूमाभाववद्वृत्तिवह्निवातिव्याप्तेर्विशिष्टान्तराघटितत्वमवश्यमेव निवेश्यम् तादृशवह्नित्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वस्य बाधविषयित्वव्यभिचाराविषयित्वयोरभावात् विशिष्टविषयित्वान्तरस्य तादृशवह्नित्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वविरहात् यत्किञ्चित्प्रतिबन्धकतानिवेशपक्षेच यत्र मेयत्वविशिष्टव्यभिचाराविषयकं ज्ञानंनियमतोबाधविषयकं बाधज्ञानमपि नियमतः किञ्चित्पदार्थान्तरविषयकमेव तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः स्वविषयित्वावच्छिन्नबाधप्रतिबन्धकतावच्छेदकबाधविषयित्वस्यान्यज्ञानीयस्य मेयत्ववि-

शिष्टव्यभिचारविषयत्वाव्यापकविषयताशून्यज्ञानीयत्वविरहात् तज्ज्ञानीयस्य तथात्वेपि तदव्यापकविषयताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारज्ञाने सत्वात् यद्रूपावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकेत्यत्रावच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे साध्याभाववत्साध्याभाववद्वृत्तिहेतुरूपपक्ष एवोक्तयुक्त्या स्थलविशेषेऽव्याप्तिर्बोध्या। नच बाधे दोषस्तत्रसिद्धान्ते दुरुद्धरः बाधज्ञानस्याव्यापकविषयताशून्यत्वविरहादितिवाच्यं किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्यैव ज्ञानविशेषणत्वात् किञ्चिद्रूपमध्येऽलक्ष्यतावच्छेदकोक्तधर्ममादाय लक्षणसम्भवात्। नच सर्वङ्गगनवद्वाच्यत्वादित्यत्राव्याप्तिवारणाय किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयता तादृशप्रतिबन्धकतानातिरिक्तवृत्तिस्तद्रूपावच्छिन्नविषयतायां न स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीयत्वंविशेषणं द्विधाऽव्यापकविषयताशून्यत्वप्रवेशे गौरवादपितु लक्ष्यतावच्छेदकीभूतयद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयत्वं तादृशप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयित्वमेव निवेश्यम्।

नचाननुगमः यद्रूपविशिष्टनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्यैवनिवेश्यत्वात् वैशिष्ट्यञ्च स्वावच्छिन्नविषयताकत्व स्वविशिष्टनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावृत्यभावीयप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्व स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिष्ठावच्छेदकताकत्वोभयसम्बन्धेन तथाच नोक्तस्थलविशेषेऽतिव्याप्तिरितिवाच्यं वह्न्यभाववज्जातिमत्कालीनवह्न्यभाववद्ह्रदेऽतिव्याप्तेः तादृशह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयताकत्वस्य जातिमान् वह्न्यभाववानितिज्ञानेपि सत्वेन तत्र प्रतिबन्धकत्वाभावात् वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वस्य तादृशप्रतिबन्धकतावच्छेदकत्वविरहात् तादृशह्र-

दत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वस्य वह्न्यभाववज्जातिमत्कालीनवह्न्यभाववज्जातिमानितिज्ञाने विरहात् तादृशविशिष्टजातिमत्वावच्छिन्नविषयत्वस्यैव तत्राव्यापकस्य सत्वादिति वह्न्यभाववज्जातिमत्कालीनवह्न्यभाववद्वृत्त्वस्यैव यद्रूपपदेनोपादेयतया तद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्योक्तविशिष्टज्ञाने सत्वात् तस्मात्तद्रूपावच्छिन्नाविषयताविशेषणमेवाव्यापकविषयताशून्यज्ञानीयत्वस्वाच्यं तत्पक्षेच स्वावच्छिन्नविषयताकत्व स्वविशिष्टविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन यद्रूपविशिष्टनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावो लक्षणघटकः स्ववैशिष्ट्यञ्च स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वघटितेन स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितयापरम्परया निरूपिता या किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वव्यक्तिनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता परम्परया तन्निरूपितावच्छेदकतावद्धर्मावच्छिन्ननिरूपितत्वघटितेनचोभयसम्बन्धेन तथाच प्रागुक्तस्थलविशेषातिव्याप्तिर्दुरुद्धरेतिदिक्।

विशिष्टविषयिताऽव्यापकत्वनिवेशनमेवोचितमितीति । अथ विषयितात्वव्यापकत्वं विषयितावृत्त्यभावघटितं विषयिताव्यापकत्वञ्च विषयित्वाधिकरणवृत्त्यभावघटितमित्यत्राधिकरणस्याधिकस्यावच्छेदकतया प्रवेशात्तत्कल्पापेक्षया न लाघवमितिचेन्न इच्छीयविषयित्वस्य प्रतिबन्धकतानवच्छेदकत्वेनासम्भववारणाय ज्ञानीयत्वस्य विषयिताविशेषणताया वाच्यतया ज्ञानस्य विषयित्वाधिकरणस्वरूपस्यावच्छेदकतयाऽवच्छेदकाधिक्यविरहात् नचाधिकरणत्वस्य विशिष्टविषयित्वनिरूपितस्यावश्यनिवेशनीयतयाऽवच्छेदकाधिक्यमितिवाच्यं ज्ञानीयविषयतात्वव्यापकत्वशब्दप्रतीतस्य ज्ञानीयत्वविशिष्टतादृशविषयतात्वनिरूपिताधिकरणतावद्वृत्तित्वघटिताभावस्य व्यापकतायास्तदधिकरणवृत्तित्वघटितार्थकत्वेपि ज्ञानीयत्वस्य विषयिताविशेषणत्वमङ्गीकृत्य विवक्षिततादृशविषयितावृत्तित्वघटिताभावापेक्षया गुरुत्वेन त्याज्यताया भवत्पक्ष इव शब्दतः प्रतीतस्य तादृशविशिष्टविषयित्वनिरूपिताधिकरणतावद्वृत्तित्वघटिताभावस्य विषयिताविशेषणानाहार्यत्वादीनामाश्रयविशेषणत्वमङ्गीकृत्य विवक्षिततादृशविषयितावत्तादृशज्ञानवृत्तित्वघटिताभावापेक्षया गौरवेणास्मत्पक्षेपि त्याज्यताया एवा·

ङ्गीकारादधिकरणत्वप्रवेशप्रयुक्तगौरवाभावात् ।

यत्तु ज्ञानीयत्वस्यविषयिताविशेषणत्वे पुच्छलग्नतया साक्षात्परम्परासाधारणनिरूपितत्वपक्षइतरवारकानिवेशेऽधिकस्य तद्भेदस्य प्रवेशनीयतया गौरवमेवेति तन्न साक्षात्परम्परासाधारणनिरूपितत्वाङ्गीकारेऽभावप्रतियोगितायामेव यावदवच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमेकदैव निविशत इति पुच्छलग्नत्वप्रयुक्तगौरवाभावात् न च व्यापकत्वांशे साम्ये व्यापकत्वस्यावच्छेदकत्वसम्बन्धेन प्रतिबन्धकतायामुक्तौ न गौरवस्यावकाशइतिवाच्यं अवच्छेदकत्वस्य वृत्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या व्यापकत्वस्यासम्भवात्, पारिभाषिकस्यान्यत्रदर्शितसमशीलत्रितयाभावरूपस्यावच्छेदकत्वसम्बन्धावच्छिन्नत्वस्य प्रवेशे गौरवापत्तेः नच भेदघटितमेवास्तु व्यापकत्वं वृत्यनियामकसम्बन्धस्य भेदप्रतियोगितावच्छेदकतावच्छेदकतायाः सर्वानुमतत्वादितिवाच्यम् अत्यन्ताभावघटितव्यापकत्वस्याप्रतियोगित्वगर्भतया प्रतियोगितानवच्छेदकत्वघटितभेदगर्भव्यापकत्वाल्लघुभूतस्यास्मत्पक्षे प्रवेशात् ।

यद्यप्यत्यन्ताभावगर्भव्यापकतापक्षेपि तज्ज्ञानवृत्तित्वविशिष्टप्रतिबन्धकत्वाभावमादायाव्याप्तिवारणाय प्रतियोगितायांतादृशप्रतिबन्धकतात्वतदितरोभयानवच्छिन्नत्वन्तादृशप्रतिबन्धकतात्वे तादृशप्रतियोगितावच्छेदकतापर्य्याप्त्यनधिकरणत्वस्वा निवेशनीयमेव तथापि भेदघटितव्यापकत्वपक्षे तज्ज्ञानवृत्तित्वविशिष्टप्रतिबन्धकतावान्नेति भेदमादायासम्भववारणाय भेदप्रतियोगितावच्छेदकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वस्य तादृशप्रतिबन्धकतात्वे प्रतियोगितायाञ्च प्रतिबन्धकतावत्तज्ज्ञानभेदवारणाय प्रतिबन्धकत्वतदितरोभयानवच्छिन्नत्वस्यनिवेशः कार्य्य एवेतिगौरवम् प्रतिबन्धकतैक्यपक्षेपि प्रतियोगितायामुभयावृत्तिधर्मावच्छिन्नावच्छेदकत्वान्यावच्छेदकत्वानिरूपितत्वमवच्छेदकतायां तादृशधर्मातिरिक्तधर्मानवच्छिन्नत्वस्भेदगर्भव्यापकताशरीरे निवेश्यमत्यन्ताभावगर्भव्यापकतागर्भे प्रतिबन्धकतावृत्युभयावृत्तिधर्मातिरिक्ततद्वृत्तिधर्मानवच्छिन्नत्वमेव प्रतियोगितायास्प्रवेश्यमिति न साम्यं भेदगर्भे लाघवप्रवादश्च प्रतियोगित्रैयधिकरण्यानिवेशप्रयुक्तस्तदन्नात्यन्ताभावगर्भेऽपि न निविशतइति निःप्रत्यूहमेव लाघवमिति ॥ ० ॥

समानकारकज्ञानेष्वि।ति समानाकारकत्वञ्च विशेष्यताविशिष्टविशे-ष्यताकत्वं वैशिष्ट्यञ्च स्वविशिष्टविषयतात्वावच्छिन्नानुयोगिताक पर्य्याप्तिकरूपवृत्तित्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन स्व वैशिष्ट्यञ्च स्वनिरूपितत्व स्वावच्छेद्यनिरूपितत्वान्यतरसम्बन्धेन स्व-विशिष्टविषयतात्वत्वसम्बन्धेन विषयतावत्ता च प्रसिद्धचतुष्टयस म्बन्धेषु येषां प्रयोजनन्तैर्वाच्यम् तथाच संशये कोटिद्वयप्रकारतानि-रूपितविशेष्यताद्वयस्याभ्युपगततया तत्तत्कोटिप्रकारतानिरूपितवि-शेष्यताविशिष्टविशेष्यताकत्वस्य तत्तत्कोटिप्रकारताकनिश्चये स-त्वेन संशयनिश्चययोस्समानाकारकत्वनिर्वाहः वह्न्यभाववान्ह्रदोव-ह्निमानितिज्ञानस्य वह्न्यभाववान्ह्रदइतिज्ञानीयह्रदनिष्ठविशेष्यतावि शिष्टविषयतात्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिवह्न्यभावविषयताह्रदत्वविषयतागतद्वित्व उक्ताहार्यज्ञानीयह्रदविशेष्यताया वृत्तित्वविरहात् तस्य स्वविशिष्टविषयतात्वावच्छिन्नानुयोगिताकप र्य्याप्तिकत्वसम्बन्धेन वह्न्यभावविषयतावह्निविषयताह्रदत्वविषयता-गतत्रित्वे सत्वादिति नोक्तानाहार्य्यज्ञानसमानाकारकत्वम्। एवं ह्र दोवह्निमानितिज्ञानसमानाकारकत्वमपि ह्रदत्वेन ह्रदावगाहिनो वह्न्य भाववान् ह्रदइतिज्ञानस्य ह्रदत्वेनघटावगाहिवह्न्यभाववान्ह्रदइतिज्ञा-नसमानकारकत्वाभावे स्वसामानाधिकरण्यं ह्रदत्वेनतद्ध्रदावगाहि ह्रदत्वेननिखिलह्रदावगाहि ज्ञानयोरसमानाकारकत्वे स्वसामनैयत्य-मेव प्रवेश्यं ह्रदइत्याकारकज्ञानयोसमानाकारकत्वरक्षायै स्वावच्छे-दकीभूतधर्मावच्छिन्नत्वस्ववृत्तिनिरवच्छिन्नत्वान्यतरमेव संसर्गतयो-पादेयमिति॥

आहार्य्यज्ञानीयविषयितासाधारणविशिष्ट विषयितात्वव्यापकत्वमिति। अथ ह्रद-त्वावच्छेदेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकजातिमान्वह्न्यभाव-वानित्याकारकज्ञानीयविषयतायाः जातिमान्ह्रदइत्याकारकनिश्चयवि शिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेपि ह्रदत्वसामानाधि-करण्येन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकजातिमान्वह्न्यभाववा-नित्याकारकज्ञानीयविशिष्टविषयितायाः प्रतिवन्धकतानवच्छेदकत्वे नाव्याप्तिवारणाय अव्यापकविषयताशून्यज्ञानीयत्वस्य निवेशनीयत-या तस्य यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता य-द्रूपावच्छिन्नविषयत्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रू-

पावच्छिन्नविषयताशून्यज्ञानीयत्वरूपत्वे वह्न्यभाववान्ह्रदोवह्निमानित्याहार्य्यज्ञानीयविषयितामादाय दोषासम्भव इतिचेन्न ह्रदपक्षके तादात्म्येन वह्निसाध्यकस्थले वह्निभेदवद्ह्रदस्य बाधतया तद्रूपावच्छिन्नविषयकस्य वह्निभिन्नोह्रदोवह्निरित्याहार्य्यज्ञानस्य निरुक्ताव्यापकविषयताशून्यतया तदीयविषयतामादायाव्याप्तेस्सम्भवात् । नच वह्निभिन्नह्रदत्वावच्छिन्नविषयतानिरूपितसमवायत्वावच्छिन्नविषयतैव तत्राव्यापकविषयतास्तीति नदोष इति वाच्यं संसर्गस्य स्वरूपतोपिभानस्वीकारात् ह्रदपक्षकभेदत्वसाध्यकस्थले भेदभिन्नोह्रदोभेद इति ज्ञानेऽव्यापकविषयताशून्यत्वस्य सत्वात् ह्रदत्वावच्छिन्नविषयतानिरूपितस्वरूपत्वावच्छिन्नविषयतायास्तादृशह्रदत्वावच्छिन्नविषयत्वाव्यापकत्वविरहात् तादृशह्रदत्वावच्छिन्नविषयतानिरूपितस्वरूपत्वावच्छिन्नविषयतापि नाव्यापिका यद्रूपावच्छिन्नविषयतायाः शुद्धह्रदत्वावच्छिन्नविषयताया एव विशिष्टविषयतारूपत्वेन तन्निरूपितस्वरूपत्वावच्छिन्नविषयताया विशिष्टदोषज्ञाने सत्वात् यद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावद्यद्रूपावच्छिन्नविषयत्वविवक्षणे च भेदोह्रदोभेदभिन्न इति ज्ञाने भेदभेदवद्ह्रदत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्स्वरूपत्वावच्छिन्नविषयताविरहात् तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वस्य ह्रदोभेदभिन्न इति ज्ञानेपि विरहेण विवक्षितुमशक्यत्वादिति ।

अथैवमव्यापकविषयताशून्यज्ञानीयत्वस्य विषयितायामवश्यम्विशेषणत्वे वह्न्यभाववान्ह्रद इति ज्ञानीयह्रदत्वावच्छिन्नविषयिताया स्तादृशज्ञानीयत्वविरहात् ह्रद इति ज्ञानीयायाश्च प्रतिबन्धकतानवच्छेदकत्वादेकदेशातिप्रसङ्गस्याभावेन सामान्यपदस्यव्यर्थम् नच गोत्वाभावो गोत्ववानित्यत्र गोत्वाभाववत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यस्य गोत्वाभावत्वेन धर्मितया घटाभावाद्यवगाहिगोत्वाभावो गोत्वाभाववानितिज्ञानस्य गोत्वाभाववत्वावच्छिन्नविषयतायाः प्रतिबन्धकतावच्छेदकत्वेनातिव्याप्तेस्तन्निवेशः कार्य्य इति वाच्यम् । अव्यापकतया यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषतायाः प्रवेशो दोषाभावात् नच स्वरूपपक्षकभेदत्वसाध्यके भेदभेदवत्स्वरूपमितिज्ञाने भेदभेदवत्वावच्छिन्नविषयत्वाव्यापकस्य यद्रूपावच्छिन्न-

विषयतानिरूपितयद्रूपावच्छिन्नविषयत्वस्य विरहात् भेदभेदवत्त्वाव-च्छिन्नेऽतिप्रसङ्ग इति वाच्यं स्वरूपत्वावच्छिन्नविषयतानिरूपितस्व-रूपत्वावच्छिन्नविषयताया एवाव्यापकविषयताया उक्तज्ञाने सत्वात् तच स्वरूपवत्स्वरूपवत्त्वम्भेदत्वविशेषणमास्तान्तत्रैव दोषः स्वरूप-पक्षकस्वरूपवत्स्वरूपाभावसाध्यकस्थले स्वरूपं स्वरूपवत्स्वरूपव-दितिज्ञानविषये स्वरूपवत्स्वरूपवत्यतिव्याप्तिरिति वाच्यं यद्रूपाव-च्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविशेष्यत्वविवक्षायामतिप्रसङ्गा-नवकाशादिति चेत् ।

अत्र केचित् अयंघटभिन्नोगुणो द्रव्यभिन्न इत्यादिस्थले स्वरूप-तोघटत्वप्रकारकस्यायं घट इति प्रमाज्ञानस्य स्वरूपतोद्रव्यत्वप्रकार-कस्य गुणोद्रव्यमितिभ्रमस्य च विषय इदन्त्वावच्छिन्ने गुणत्वाव-च्छिन्ने चातिप्रसङ्गान्निवेश्यमेव सामान्यपदमिति वदन्ति ।

अत्रेदमवधेयम् यद्विषयताविशिष्टप्रकारतानिरूपितयद्रूपावच्छिन्न-विशेष्यत्वं यद्रूपावच्छिन्नविषयत्वाव्यापकं तद्विषयतानिरूपिततत्तद्रू-पावच्छिन्नविशेष्यताशून्यत्वमेव विवक्षणीयम् वैशिष्ट्यञ्च स्वसामाना-धिकरण्य स्ववृत्तिनिरवच्छिन्नत्वोभयाधिकरणत्वघटितेन स्वाविशि-ष्टवृत्तित्वघटितेन वा स्वावच्छेदकावच्छिन्नत्वघटितान्यतरस-म्बन्धेन स्ववैशिष्ट्यञ्च स्वाधिकरणनिरूपितत्व स्ववृत्तिनिरवच्छि-न्नत्वसामानाधिकरण्योभयसम्बन्धेन एवञ्च घटत्वद्रव्यत्वादिनिष्ठनि-रवच्छिन्नविषयताविशिष्टनिरवच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्न-विशेष्यताया अव्यापकत्वान्नातिव्याप्तिः स्वरूपत्वावच्छिन्नसांसर्गि-कविषयताविशिष्टप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताया अव्या-पकत्वादसम्भवापत्त्या यद्विषयतापि प्रकारतात्वेनैव निवेश्या वह्नि-रवृत्तिरित्यत्र वह्निमद्रूपवाधज्ञानस्य वह्नित्वावच्छिन्नविषयत्वाव्यापक-निरुक्तविषयताशून्यत्वेन वह्नावतिव्याप्तिवारणाय यद्रूपावच्छिन्नवि-शेष्यतापि यद्विशेष्यताविशिष्टविशेष्यतात्वेन प्रवेशनीया वैशिष्ट्यञ्च पूर्ववत् तथाच वह्नित्वावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नविशेष्य-तैव तत्र वह्नित्वावच्छिन्नविषयित्वाव्यापिकास्तीति न दोषः विशेष-णीभूतविषयताया विशेष्यतात्वेन निवेशात् वह्न्यभावत्वावच्छिन्न-प्रकारताविशिष्टप्रकारतानिरूपितस्वरूपत्वावच्छिन्नसांसर्गिकविषय-ताविशिष्टस्वरूपत्वावच्छिन्नविशेष्यत्वस्य वह्न्यभाववद्धृदत्वावच्छिन्न-

विषयित्वाव्यापकत्वेपि नासम्भवः एवञ्चानाहार्य्यज्ञानीयत्वमपि न निवेश्यम् तथाच सामान्यपदार्थनिवेशपक्षेप्यव्यापकविषयिताशून्यत्वस्य निविष्टतयात्रापि तन्निवेशस्तुल्य एव परन्त्वत्र यत्प्रकारताविशिष्टप्रकारतानिरूपितत्वस्य यद्विशेष्यताविशिष्टत्वस्य तत्प्रकारतानिरूपितत्वस्य च प्रवेशो यद्यप्यधिक एवास्ति तथापि तादृशविषयताशून्यानाहार्य्यज्ञानीययद्रूपावच्छिन्नविषयतावृत्यभावप्रतियोगितावच्छेदकत्वाभावस्य स्वकोटिप्रविष्टनिखिलपदार्थनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकस्य तादृशप्रतिबन्धकतावच्छेदकतात्वतदितरोभयानवच्छिन्नत्वघटितस्य प्रतियोगितावच्छेदकतापर्य्याप्तिघटितस्य वा निवेशापेक्षया लाघवमस्त्येव सिद्धान्तकल्पेपि यद्यप्येतादृशाव्यापकाविषयताशून्यत्वनिवेशे संशयाहार्य्यज्ञानयोर्वारणसम्भवः तथापि तदपेक्षया लाघवेन संशयान्यत्वानाहार्य्यत्वयोर्निवेशनमेव समुचितम् ।

यत्तु प्रमेयत्वादिना स्वरूपत्वादिरूपसंसर्गतावच्छेदकावगाहिज्ञानावारकत्वान्निवेशयितुन्नशक्यं तादृशाव्यापकविषयताशून्यत्वमिति तत्तुच्छम् तद्घटकविषयतायाः प्रकारतात्वादिना निवेशनमविधाय उक्तान्यतरवत्वस्वसाजात्योभयस्य विषयतावैशिष्ट्यतयोपादेयत्वादित्यलम् ।

प्रकृतमनुसरामः अथ अयंघटभिन्न इत्यादौ स्वरूपतोघटत्ववदिदन्त्वाद्यवच्छिन्नलक्षणासम्भवः घटत्वसमवायत्वसमवायेदन्त्वगतसमवायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य प्रमेयवानयमिति ज्ञाने सत्वेन तत्रायंघट इति ज्ञानीयनिरवच्छिन्नप्रकारताविशिष्टप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताविशिष्टविशेष्यताया अभावेनाव्यापकतया तद्विषयतानिरूपितताद्विषयताशून्यत्वस्य प्रतिबन्धकज्ञाने विरहादिति चेन्न यद्विशेष्यत्वप्रकारत्वयोर्वैशिष्ट्यस्य स्वतादात्म्यापन्ननिरवच्छिन्नविषयतासामानाधिकरण्यस्वावच्छेदकावच्छिन्नत्वान्यतरसम्बन्धेन वाच्यत्वाद्दोषाभावात् तस्मात् वह्नित्वसमवायसमवायत्ववह्निप्रतियोगित्वाभावत्वाभावस्वरूपत्वस्वरूपह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वस्य वह्न्यभाववत्कालीनह्रदत्ववानयमितिज्ञाने सत्वेन तत्र वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्टप्रकारता-

निरूपितह्रदत्वावच्छिन्नविशेष्यताविशिष्टविशेष्यताविरहात् तत्प्रकारतानिरूपिततद्विशेष्यताया वह्न्यभाववान्ह्रद इति ज्ञाने सत्वादसम्भव एव दोषत्वेनात्रस्वीकरणीयः सच यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयत्वनिष्ठाव्यापकत्वघटितकल्पेपि सम्भवतीति स एवोद्भावयितुं योग्यः ।

सिद्धान्ते च प्रागुक्तसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वस्याव्यापकत्वविरहात् कालीनत्वादिघटितसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वस्याव्यापकत्वेन तच्छून्यत्वस्य वह्न्यभाववानितिज्ञाने सत्वात् वह्न्यभाववत्कालीनह्रदत्ववानितिज्ञाने विरहाच्च न दोषः यदिचाभावपक्षकसंयोगेन वाच्यत्वसाध्यकस्थले वाच्यत्वाभाववानभावः अभाववान् वाच्यत्वाभाव इति ज्ञानयो र्विभिन्नरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य रूपभेदस्य च प्राक्दर्शितत्वेन तथैव ह्रदत्वावच्छिन्ने वह्न्यभावस्य यत्र विशेषणत्वं तज्ज्ञानीयविषयतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वमेव वह्नित्ववह्न्यभावत्वाभावह्रदत्वगतप्रागुक्तसमुदायत्वे स्वीक्रियते तथासति न दोषः एवन्तत्तद्धर्मावच्छिन्नानुयोगिताकतत्तद्धर्मावच्छिन्नप्रतियोगिताकसंसर्गस्य भिन्नत्वे दोषघटकत्वे च तादृशसंसर्गसाधारणसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वस्य वह्न्यभाववत्कालीनह्रदत्ववानितिज्ञाने विरहान्नासम्भव इत्युच्यते तदाप्यधिकरणत्वघटितस्य दोषत्वमङ्गीकृत्य अभावोवाच्यत्वाभाववानित्यत्र दोषवारणस्य प्रागुक्तत्वेन तत्पक्षेऽसम्भवस्तदवस्थ एव एवं यत्र दोषघटककिञ्चित्पदार्थविषयकं ज्ञानन्नियमतोदोषविषयकं तत्र तादृशाकिञ्चित्पदार्थेऽतिव्याप्तिः सामान्यपदार्थस्य लक्षणघटकत्वे च दोषवहिर्भावेण तत्पदार्थविषयकज्ञानीयतद्विषयतायाः प्रतिबन्धकतानवच्छेदकत्वान्नदोष इति गृहाण। नच सिद्धान्ते तत्रातिव्याप्तिरिति वाच्यमेतत्कल्पाङ्गीकृतस्थलविशेषस्य सिद्धान्तेऽङ्गीकारे सिद्धान्तेऽङ्गीकृतस्यात्राप्यङ्गीकरणीयत्वात् तथासत्यव्यापकविषयताशून्यत्वस्यावश्यविवक्षणीयत्वे योभिहितोरूपवृत्तित्वनिवेशोऽव्याप्तिरूपदोषः प्रयोजकतया तस्यात्रप्रसङ्गेन किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वस्य प्रवेशनीयतया ह्रदाद्येकदेशातिव्याप्तिर्दुरुद्धरेति बोध्यम् ।

मैवं स्वरूपसम्बन्धरूपावच्छेदकत्व इत्यादि । अथात्र ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षत्वे तत्र साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुरूपासाधारण्ये चाव्याप्तिमुद्धाव्यानतिरिक्तवृत्तित्वस्था वक्ष्यविवक्षणीयता प्रतिपादिता तन्नयुज्यते तत्पक्षे विशिष्टद्वयाघटितत्वनिवेशस्यावश्यकतया तत्र बहुतरसत्प्रतिपक्षादिलक्ष्यविषयताऽलक्ष्यविषयताभेदनिवेशस्यावश्यकतायाः प्रतिपादनीयतया लाघवेनैतत्पक्ष एवसत्प्रतिपक्षविषयताऽसाधारण्यविषयताभिन्नत्वयोरसाधारण्यविषयताभिन्नत्वस्यैव वा निवेशमाहत्य यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वासाधारण्यविषयताभिन्नत्वोभयाभावनिवेश एव कार्यस्तावतैव पाषाणमयत्ववत्पर्वतादावतिप्रसङ्गस्य असाधारण्येऽव्याप्तेश्च वारणसम्भवात् । नच नञ्द्वयप्रवेशो व्यर्थः स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयतादृशप्रतिबन्धकतानवच्छेदकघटत्वावच्छिन्नविषयतासामान्य एवोभयाभावसत्वेन घटत्वावच्छिन्नेऽतिप्रसङ्गवारकत्वात् यदिचात्राव्यापकविषयताशून्यज्ञानीयत्वनिवेशस्य न प्रयोजनमित्युच्यते तदास्तुतावत्तथा तथापि पर्वतत्वसमानाधिकरण्येन वह्नेः साध्यतायान्धूमस्य हेतुत्वे वह्निमद्वह्निव्याप्यधूमवत्पर्वतेऽतिव्याप्तिः तद्विषयकज्ञानस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वासम्भवात् तथाविधस्याहार्य्यत्वात् धूमाभाववान्वह्न्यभाववान्वह्न्यभाववान्ह्रदइतिज्ञानयोः निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया वाधादिविषयताया अपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाद्वाधादावव्याप्तिरपि अतएव वह्निमद्ध्रदोघटवान् जलव्यापकवह्न्यभावसमानाधिकरणजलाभावादित्यत्र तादृशजलवद्ध्रदरूपस्वरूपासिद्धौ नाव्याप्तिः ज्ञानवैशिष्ट्यानवच्छिन्नस्वरूपासिद्धिनिश्चयप्रतिबन्धकतायां तद्विषयत्वस्यावच्छेदकत्वात् । यद्यपि सत्प्रतिपक्षविषयताभेदनिवेशपक्षे तस्य प्रकृतानुमितित्वव्यापक प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषायत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयता भेदरूपत्वमेववाच्यम् । अन्यथा वह्निमद्ध्रदपक्षकस्थले ह्रदपक्षकवह्निहेतुकस्थले वह्निमद्ध्रदसाध्यकस्थले वह्निमद्ध्रदहेतुकस्थले च तादृशजलवद्ध्रदएवपक्षाप्रसिद्धिस्वरूपासिद्धिसाध्याप्रसिद्धिहेत्वप्रसि-

द्विरूपे नञ्द्वयविवक्षायामपि दोषस्य दुर्वारत्वात् तथाचोक्तस्वरूपासिद्धौ न दोषः तथापि ह्रदो वह्निमान्वह्न्यभाववज्जलवद्वृत्तिजलाभावादित्यत्र स्वरूपासिद्धावव्याप्तिः नञ्द्वयाप्रवेशे दुरुद्धरा तद्विषयताया साध्यवत्ताबुद्धिप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वात् तादृशविषयताभिन्नत्वाच्च ।

नचैवमपि वह्न्यभाववद्वह्निव्यापकाभाववत्कालीनत्वे सति वह्न्यभाववद्वह्निमदवृत्तिमत्कालीनह्रदपक्षकवह्निसाध्यकस्थले वह्निव्यापकाभाववत्तादृशह्रद वह्निमदवृत्तिमत्तादृशह्रदयोर्बाधरूपत्वपक्षे तयोरव्याप्तिः तद्बुद्धेर्निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वात् व्यावर्त्तकधर्मदर्शनरूपत्वादिति वाच्यम्वह्न्यभावस्येव वह्निव्यापकाभावस्यापि स्वरूपत एव वह्निविरोधित्वात् । अन्यथा बाधत्वानुपपत्तेरिति तादृशह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्यापकाभावत्वावच्छिन्नप्रकारताकविशिष्टनिश्चयत्वेन प्रतिबन्धकतायास्बाधकाभावात् तादृशह्रदे वह्निव्यापकाभावेऽव्याप्यवृत्तित्वग्रहे व्यावर्त्तकधर्मदर्शनप्रतिबन्धकताया इव वह्निव्यापकाभाववतिवह्न्यभावस्याव्याप्यवृत्तित्वग्रहे विशिष्टनिश्चयत्वेन प्रतिबन्धकताया अप्यावश्यकत्वात् वह्न्यभावेऽव्याप्यवृत्तित्वग्रहे ऽप्रतिबन्धकत्वस्यानुभविकत्वे व्यापकाभावेऽपि स्वरूपतोविरोधिन्यव्याप्यवृत्तित्वग्रहे तथात्वे किमितिहिनेत्रनिमीलनम् ।

वस्तुतो व्यावर्त्तकधर्मदर्शनविधयाप्रतिबन्धकत्वेपि यद्यपि नावश्यंनिश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकताकल्पनमुचितम् तथाप्येतद्विचारस्य प्रदर्श्यमाणशिष्यबुद्धिवैशद्यार्थप्रक्रियाविरोधित्वेनोपेक्षैव समुचितेदानीम् नच ह्रदपक्षकवह्निसाध्यकजलाभावहेतुकस्थले विशिष्टद्वयाघटितत्वनिवेशवार्य्यतयोक्ते वह्न्यभाववज्जलवत्कालीन जलवद्ह्रदेऽति व्याप्तिः तद्विषयताया ज्ञानवैशिष्ट्यानवच्छिन्नासिद्धिप्रतिबन्धकतावच्छेदकत्वात् ज्ञानवैशिष्ट्यानवच्छिन्नतादृशप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञानीयविषयताभिन्नत्वनिवेशे तद्दोषवारणेपि वह्न्यभाववज्जलवत्कालीनत्वाभाववज्जलकालीनजलाभावहेतुकस्थले निरुक्तविशिष्टेऽतिव्याप्तेर्नवारणम् कालीनत्वविषयताया अप्यसिद्धिप्रतिबन्धकतावच्छेदकत्वादिति वाच्यं तादृप्रतिबन्धकताविशिष्टान्यत्वस्यैव विवक्षितत्वात् वैशिष्ट्यञ्च स्वानवच्छेदकीभूतविषयताशून्यज्ञानीयत्वसम्बन्धेन तथाचोक्तविशिष्टविषयतायां निरू-

क्तसम्बन्धेनासिद्धिप्रतिबन्धकत्वयोर्मध्ये कस्याप्यसत्वात् वस्तुतस्तूक्त-विवक्षायामपि वह्न्यभाववद्वह्न्यभाववद्ध्रदत्वावच्छिन्नेऽतिप्रसङ्गवारणाय विशिष्टान्तराघटितत्वस्यावश्यविवक्षणीयतया तेनैवासिद्धिद्वय-घटितोदासीनेऽतिप्रसङ्गवारणसम्भवेन निरूक्तविवक्षाया अनावश्यकत्वं नचोक्तज्ञाने वह्न्यभावत्वावच्छिन्नावच्छेदकतैव प्रतिबन्धकतानवच्छेदिकास्तीति नावश्यकताविशिष्टान्तराघटितत्वस्येतिवाच्यं ह्रदत्वादिप्रकारतायाः प्रतिबन्धकतानवच्छेदिकाया वन्ह्यभाववद्ध्रदादिज्ञाने सत्वेनासम्भववारणाय प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वरूपस्यैव प्रतिबन्धकतानवच्छेदकत्वस्य वाच्यत्वात् वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसम्बन्धेन बोध्यम् ।

यत्तु मेयत्वविशिष्टासाधारण्यविषयतायामसाधारण्यविषयताभिन्नत्वविरहादति व्याप्तिवारणाय विशिष्टान्तराघटितत्वान्निवेश्यमिति तन्न असाधारणण्यप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञानीयविषयता भिन्नत्वस्य विवक्षितत्वे तद्दोषासम्भवात् अतएव घटोगगनाभाववद्भाववत्कालीनगगनवानित्यत्र बाधबुद्धेर्व्यावर्त्तकधर्मदर्शनरूपत्वेन तत्प्रतिबन्धकतयैवनिर्वाहे विशिष्टबुद्धित्वेन प्रतिबन्धकतायाम्मानाभावेन बाधषियतायास्तादृशप्रतिबन्धकतानवच्छेदकत्वेन तादृशबाधेऽव्याप्तिरितिनिरस्तम् शुद्धगगनाभावेऽव्याप्यवृत्तित्वग्रहदशायाम्विशिष्टगगनाभावे तदभावेन विशिष्टनिश्चयत्वेन प्रतिबन्धकतायाः सम्भवादावश्यकत्वाच्च दोषासम्भवात् ।

अथ गगनाभाववदभाववत्कालीनघटोगगनवानित्यत्र बाधेऽव्याप्तिः बाधज्ञानस्य व्यावर्त्तकधर्मदर्शनत्वेन ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वात् अभाववतिगगनाभावोऽव्याप्यवृत्तिरितिज्ञाने ज्ञानाविशिष्टज्ञानत्वेनेव विशिष्टज्ञानत्वेनापि प्रतिबन्धकत्वासम्भवात् तत्सत्वएवबाधज्ञान एवाभाववत्वेन घटस्यभानात् तथासति तस्यप्रतिबन्धकताया अनुभवातीतत्वात् यथा जलावच्छेदेन वह्न्यभावेऽव्याप्यवृत्तित्वग्रहे जलवत्तया गृहीतह्रदे वह्न्यभाववत्तानिश्चयस्य वह्निमत्ताबुद्धिप्रतिबन्धकताया आनुभविकत्वानङ्गीकारस्तथात्रापि तस्यानङ्गीकरणीयत्वात् न च निश्चयविशिष्ट निश्चयत्वेन प्रतिबन्धकत्वे मानाभावः । तादृशघटत्वावच्छिन्नविशेष्यतानिरूपिता या गगनाभावत्वेनाभावत्वेन वा वच्छिन्नप्रकारता तन्निरूपकनिश्चयत्वेन प्रतिबन्धकतयैव निर्वाहादिवाच्यं जलवान्

गगनाभाववान् जलवान्तादृशघटइतिनिश्चययो र्निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकताया आवश्यकतया तथाविधानामनन्तज्ञानानामनन्तप्रतिबन्धकत्वापेक्षया ज्ञानविशिष्टज्ञानत्वेनैकप्रतिबन्धकत्वकल्पनस्यैव समुचितत्वात् वैशिष्ट्यञ्च स्वसमानाधिकरणस्वीयगगनाभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपिततादृशंघटत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन अवच्छेदकतावैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वोभयसम्बन्धेन तथाच तादृशप्रतिबन्धकतयैव निर्वाहे विशिष्टनिश्चयत्वेन प्रतिबन्धकतायामनाभाव इत्युक्तदोषोदुरुद्धर इति चेन्न प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टान्यत्वस्याप्युक्ताभावप्रतियोगित्वेन विवक्षितत्वात् वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकत्व स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन तथाच तादृशघटोगगनवानिति बुद्धिम्प्रति तादृशघटोगगनाभाववानितिनिश्चयस्य प्रतिबन्धकत्वेन प्रतिबध्यत्वेन च तदीयविषयतायास्तदुभयावच्छेदकत्वान्नाव्याप्तिसम्भवः एवञ्च साध्याभाववदवृत्तित्वरूपव्याप्तिघटितस्यैव सत्प्रतिपक्षत्वे सत्प्रतिपक्षविषयताभेदस्यानिविष्टत्वेन तत्राव्याप्तिवारणाय प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षत्वे सत्प्रतिपक्षविषयताभेदनिवेशस्यावश्यकत्वेपि वह्निव्यापकाभाववद्ह्रदएवाव्याप्तिवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य प्रतियोगितयाप्रवेशः पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिवारणाय प्रथमसम्बन्धनिवेशः।

नचैवमपि वन्ह्यभाववज्जलवत्कालीनत्वेसति जलाभाववद्वह्निमत्कालीनह्रदपक्षकवह्निसाध्यकस्थले जलवत्तादृशह्रदेऽतिव्याप्तिः। तन्निश्चयस्य साध्यवत्ताबुद्धिम्प्रति जलवान्वन्ह्यभाववानितिनिश्चयविशिष्टत्वेन प्रतिबन्धकत्वात् प्रतिबध्यत्वाच्च तद्विषयतायास्तदुभयावच्छेदकत्वेन प्रतिबध्यताविशिष्टान्यत्वविरहात्। यद्यपि प्रथमसत्यन्तस्य प्रकृते नास्तिफलं तथाप्युक्तप्रक्रियाया असम्भववारणाय विशिष्टद्वयाघटितत्वेप्यनुसर्त्तव्यतया तदभिसन्धानाल्लाघवात्तदुपयोग्यपिविशेषणमत्रैव प्रदर्शितं प्रदर्शयिष्यतेचेति

बोध्यम् ।

यत्तु ज्ञानवैशिष्ट्यानवच्छिन्नत्वं स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकताविशेषणस्वाच्यमिति नोक्तदोष इति तन्न वह्निधूमोभयाभाववद्वह्निधूमोभयाभाववत्कालीनत्वेसति वह्निधूमोभयवद्धूमवत्कालीनह्रदपक्षकवह्निधूमोभयसाध्यकस्थले वह्निधूमोभयाभाववत्तादृशह्रदेऽव्याप्त्यापत्तेः बाधबुद्धिम्प्रति साध्यवत्ताबुद्धेर्निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वादिति वाच्यम् स्वविशिष्टनिश्चयत्वव्यापकेत्यत्रस्ववैशिष्ट्यं न स्वरूपमात्रेण किन्तु स्वावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नधर्मिकाव्याप्यवृत्तित्वज्ञानानास्कन्दितत्व स्वरूपोभयसम्बन्धेन वाच्यम् तथासत्युक्तोभयसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेकावच्छिन्नविशेष्यताकग्रहत्वावच्छिन्नप्रतिबध्यत्वस्य जलाभावो वह्निमत्यव्याप्यवृत्तिरिति ज्ञानास्कन्दितज्ञानेऽपि सत्त्वेन तत्र जलव्यावर्त्तकधर्मदर्शनप्रतिबन्धकताया अभाववत्त्वादुक्तापत्तेरसम्भवात् । नच वह्न्यभावव्याप्याभाववद्वह्निमत्कालीनपर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिः तद्विषयतायां प्रतिबध्यताविशिष्टत्वस्यैव सत्वात् साध्यवत्ताबुद्धेरुक्तविषयताकबुद्धिम्प्रति विशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वात् उक्तविषयताकनिश्चयस्य च साध्यतत्ताबुद्धिम्प्रति वह्न्यभावव्याप्याभाववान्वह्निमानित्याकारकनिश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वादितिवाच्यम् विशिष्टान्यत्वघटकवैशिष्ट्यस्य स्वविशिष्टप्रतिबध्यतावच्छेदकत्वसम्बन्धेन वाच्यत्वात् स्ववैशिष्ट्यञ्च स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्वसम्बन्धेन स्ववैशिष्ट्यञ्चोभयत्रैव निश्चये प्रागुक्तादृशोभयसम्बन्धेनेत्युक्तदोषविरहात् ।

अथ निरवच्छिन्नस्वरूपेण वह्न्यभाववज्जलवत्कालीनत्वेसति निरवच्छिन्नस्वरूपेण जलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदेऽतिव्याप्तिः तादृशह्रदधर्मिकस्य वह्निमत्त्वनिश्चयस्य जलवत्त्वनिश्चयस्य च वह्न्यभावजलाभावाव्याप्यवृत्तित्वग्रहानास्कन्दितस्यैवानाहार्य्यत्वेन तत्तत्प्रतिबध्यताविशिष्टानाहार्य्यनिश्चयत्वव्यापकत्वस्य तत्तत्प्रतिबन्धकतायां सत्त्वादितिचेन्न प्रतिबध्यताविशिष्टान्य-

स्वमिहाय प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकावच्छिन्नजनकतानिरूपितजन्यतानवच्छेदकत्वस्य वाच्यत्वात् वह्न्यभाववज्जलवत्कालीनत्वे सति वह्न्यभाववज्जलव्याप्यवत्कालीनह्रदपक्षकवह्निसाध्यकस्थले जलवत्तादृशह्रदेऽतिव्याप्तिः साध्यवत्तावुद्धिं प्रति तादृशह्रदो जलव्याप्यवानिति ज्ञानस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तज्जन्यतावच्छेदकत्वस्यैव तादृशह्रदविषयतायां सत्त्वादतो ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशः। नचैवमपि वह्निव्याप्यवद्वह्निमत्कालीन पर्वतपक्षकवह्निव्याप्याभावसाध्यकस्थले वह्निमत्तादृशपर्वतेऽतिव्याप्तिः ताद्विषयताया निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेऽपि साध्यवत्ताबुद्धिप्रतिबन्धकवह्निव्याप्यवत्ताज्ञानजन्यतावच्छेदकत्वादिति वाच्यम् प्रतिबध्यताविशिष्टजन्यतानवच्छेदकत्वस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकावच्छिन्नजनकतानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकावच्छिन्नत्वसम्बन्धेन तथाच वह्निमत्तादृशपर्वतनिश्चयप्रतिबन्धकनिरूपितजन्यतावच्छेदकत्वस्य साध्यवत्ताज्ञानविषयतायाम्विरहान्नातिव्याप्तिः वह्न्यभाववद्वह्निव्याप्याभाववत्कालीनह्रदपक्षकवह्निसाध्यकस्थले वह्निव्याप्याभाववद्ध्रदेऽतिव्याप्तिः तन्निश्चयप्रतिबन्धकवह्निव्याप्यवत्ताज्ञानजन्यतावच्छेदकत्वस्य साध्यवत्ताज्ञानीयविषयतायां सत्त्वादतः प्रथमसम्बन्धनिवेशः।

यत्तु वह्न्यभाववज्जलवत्कालीनत्वे सति वह्न्यभाववज्जलव्याप्यवत्कालीनत्वे सति जलाभाववद्वह्निव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदेऽतिव्याप्तिः साध्यवत्ताबुद्धिम्प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतादृशह्रदधर्मिकजलव्याप्यवत्ताज्ञानजन्यतावच्छेदकत्वस्य जलवत्तादृशह्रदविषयतायां तन्निरूपकग्रहम्प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतादृशह्रदधर्मिकवह्निव्याप्यवत्तानिश्चयजन्यतावच्छेदकत्वस्य साध्यवत्त्वज्ञानविषयतायाञ्च सत्त्वादुक्तजन्यतानवच्छेदकत्वस्य तादृशह्रदविषयतायाम्विरहात्। नच ह्रदो वह्निमानित्यत्रैव जलवद्ध्रदेऽतिव्याप्तिः वह्निमत्ताबुद्धिम्प्रति जलव्याप्यवत्ताबुद्धेर्जलवत्ताबुद्धिम्प्रति वह्निव्याप्यवत्ताबुद्धेर्वह्न्यभावावच्छेदक-

जलव्याप्यवत्त्वबुद्धिविशिष्टत्वेन जलाभावावच्छेदकवह्निव्याप्यवत्त्वज्ञान-विशिष्टत्वेन च प्रतिबन्धकतया तदवच्छेदकविषयत्वावच्छिन्नतत्तज्ज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकत्वस्य जलवान्हृद इतिज्ञानविषयत्वे साध्यवत्ताज्ञानविषयत्वे चसत्त्वादितिवाच्यं वह्निमत्ताबुद्धिम्प्रति हृदोवह्न्यभाववाञ्जलव्याप्यवानित्येकम्रद्वयमिति रीत्या जायमानज्ञानस्य वह्न्यभावजलव्याप्योभयवानितिज्ञानस्य चप्रतिबन्धकतया तदीयविषयतायास्तादृशप्रतिबन्धकतावच्छेदकत्वात् जलवत्ताज्ञानजनकतावच्छेदकत्वाच्च एवञ्जलवत्ताबुद्धिम्प्रति जलाभाववान्वह्निव्याप्यवानित्येकद्वयमितिरीत्याजायमानस्य जलाभाववह्निव्याप्योभयप्रकारकस्य च ज्ञानस्य प्रतिबन्धकतया तदीयविषयतायाश्च तादृशप्रतिबन्धकतावच्छेदकत्वाद्वह्न्यनुमितिजनकतावच्छेदकत्वाच्च जलवद्ध्रदविषयतायास्तादृशजन्यतानवच्छेदकत्वविरहेण जलवद्ध्रदेऽतिव्याप्तेरनन्यवारणीयाया निवारणाय प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणविषयतापर्य्याप्तावच्छेदकताकत्वस्य वाच्यतयोक्तरीत्याऽतिव्याप्त्यसम्भवात्। नच विषयत्वमनन्तर्भाव्य पर्य्याप्तिरवच्छेदकतयावाच्या तावतैव तादृशहृदपक्षकस्थलेपि न दोषः जनकतानवच्छेदकज्ञानवैशिष्ट्यस्य प्रतिबन्धकतावच्छेदकत्वादितिवाच्यं जनकतानवच्छेदकाव्याप्यवृत्तित्वज्ञानाभावस्य प्रतिबन्धकतावच्छेदकत्वेन सर्वत्रासम्भवापत्तेः पर्य्याप्त्यधिकरणतया विषयत्वस्यैव निवेश्यत्वात् नच प्रतिबन्धकतानिरूपितप्रकारतात्वावच्छिन्नावच्छेदकतापर्य्याप्तिविवक्षणान्नोक्तदोषः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां प्रकारताद्वयस्य जनकतायामेकप्रकारताकत्वस्यावच्छेदकत्वादितिवाच्यम् इदानीमेकरूपेण प्रतिबन्धकत्वस्याभ्युपगमेन धर्मिविशेष्यकतत्प्रकारकज्ञानयोरेकरूपेण प्रतिबन्धकत्वानुरोधेन विषयत्वघटितधर्मस्यैव प्रतिबन्धकतावच्छेदकत्वेनासम्भवापत्तेरिति।

अथ वह्न्यभाववाञ्जलव्याप्यवानितिज्ञानीयविषयत्वेपि प्रतिबन्धकतावच्छेदकत्वपर्य्याप्तेः सत्त्वेन तत्र जनकतावच्छेदकपर्य्याप्तिविरहेण तादृशह्रदपक्षकस्थलेपि दोषवारणमितिचेन्न वह्न्यभावव्याप्यवान्ह्रदोघटाभावव्याप्यवानितिज्ञानस्य घटाभावानुमितेरेव जनकत्वाद्वह्निमत्ताबुद्धेरपि प्रतिबन्धकत्वात् वह्न्यभावानुमितेर्जनकत्वेपि वा तस्य नियतद्वेषविषयानुमितिविषयसिद्ध्यात्मकज्ञानस्य-

प्रतिबन्धकत्वेपि जनकत्वविरहात् आव्याप्यवृत्तिग्रहकाले वह्न्यभा-
वव्याप्यवान्वह्निमानितिज्ञानस्य जनकत्वेपि वा प्रतिबन्धकत्वविरहा-
दसम्भवापत्तेः यद्यद्रूपावच्छिन्नविषयतात्वे प्रतिबन्धकतावच्छेदक-
तावच्छेदकत्वं तत्तद्रूपावच्छिन्नविषयतात्वे जनकतावच्छेदकताव-
च्छेदकत्वस्य विवक्षणीयत्वात् तादृशह्रदपक्षके ऽतिव्याप्तेर्दुर्वारत्वात्।
नच विषयतात्वपर्य्यन्तं न वाच्यं तथासति निश्चयविशिष्टनिश्चया-
नामेकरूपेण प्रतिबन्धकत्व एवोक्तविचारस्योपक्रान्तत्वेन वह्न्यभावा-
दिधर्मितावच्छेदकीभवच्छैवालादिविषयत्वेपि प्रतिबन्धकतावच्छेदक-
त्वसत्वेन तत्र जनकतावच्छेदत्वविरहेण नोक्तदोषसम्भव इतिवाच्यं
प्रतिबन्धकतावच्छेदकविषयतानिरूपकयावद्व्याप्यसमुदायप्रकार-
कज्ञानमादायैतद्वार्प्यातिव्याप्तितादवस्थ्यात् यद्रूपावच्छिन्नत्वविशेषि
तविषयतात्वेऽवच्छेदकत्वस्य वाच्यतया धर्मितावच्छेदकीयविषयता-
याः किञ्चिद्रूपावच्छिन्नविषयतात्वेन प्रतिबन्धकतावच्छेदके ऽप्रवेशा
त्तद्दोषसम्भवादिति तन्न यद्यद्रूपवृत्तिविषयत्वे ऽवच्छेदकत्वविवक्षा-
यामुक्तातिव्याप्तेरसम्भवेन तदतिव्याप्तेरप्यसम्भवात् ।

केचित्तु प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य वाच्यत्वा-
न्नोक्तदोषः नच तदेकत्रैव विशेषणमस्त्वितिवाच्यम् तस्य प्रथमप्रतिब-
न्धकताविशेषणत्वे वह्न्यभाववद्वह्निव्याप्याभावव्याप्यवत्कालीनपर्वतप
क्षकवह्निव्याप्याभावसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिः द्वितीयप्रति
बन्धकताविशेषणत्वे वह्न्यभाववद्वह्निव्याप्याभावव्याप्यवत्कालीनह्रद-
पक्षकवह्निसाध्यकस्थले वह्निव्याप्याभावद्ध्रदेचातिव्याप्तेः वह्निमत्ताबुद्धि-
म्प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतादृशपर्वतोवह्निव्याप्या-
भावव्याप्यवानिति ज्ञानजन्यतावच्छेदकत्वस्य साध्यवत्ताबुद्धिविषयत्वे
साध्यवत्ताबुद्धिम्प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकह्रदोव-
न्हिव्याप्याभावव्याप्यवानितिज्ञानजन्यतावच्छेदकत्वस्य वह्निव्याप्या-
भाववद्ध्रदविषयतायाञ्च सत्वात् । नच तादृशप्रतिबध्यताविशिष्टज-
नकतानिरूपितजन्यतानवच्छेदकत्वमेव विवक्षणीयं नतु जनकता-
द्वयघटितङ्गौरवादत्राप्युक्तदोषाणामभावाच्च वैशिष्ट्यञ्च स्वनिरूपि
तज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकावच्छिन्नत्व स्वावच्छे-
दकीभूतधर्मावच्छिन्नप्रातिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकी-
भूतधर्मावच्छिन्नजन्यतानिरूपितत्वोभय सम्बन्धेनेतिवाच्यं वह्निव्या-

ष्यवद्वह्निमत्कालीनपर्वतपक्षकवह्निव्याप्याभावसाध्यकस्थले वह्निमत्प-र्वताविषयतायां साध्यवत्ताबुद्धिम्प्रति प्रतिबन्धकस्य निश्चयविशिष्टनि-श्चयत्वेन तम्प्रति प्रतिबन्धकताद्दशपर्वतोवह्निमानितिज्ञानजनकस्य च ताद्दशपर्वतोवह्निव्याप्यवानिति ज्ञानस्य जन्यतावच्छेदकत्वस्य सत्त्वा-द्वह्निमत्ताद्दशपर्वतेऽतिप्रसङ्गादिति वदन्ति ।

अथ सत्प्रतिपक्षविषयताभेदानिवेशपक्षे वह्न्यभावव्याप्यवद्वह्न्य-भावव्याप्यवत्कालनिह्रदोवह्निमानित्यत्र वह्न्यभावव्याप्यवत्ताद्दशह्रदे-ऽव्याप्तिः ज्ञानविशिष्टज्ञानत्वेनावश्यकल्प्यप्रतिबन्धकतयैव तज्ज्ञानाद-पि कार्य्यप्रतिबन्धनिर्वाहे विशिष्टज्ञानत्वेन प्रतिबन्धकतायां मानाभावेन तद्विषयतायामसाधारण्यविषयताभिन्नत्वस्य ज्ञानवैशिष्ट्यानवच्छि-न्नप्रतिबन्धकतानवच्छेदकत्वस्य ताद्दशजन्यतानवच्छेदकत्वस्यैव स-त्त्वादेतद्वारणायैव सत्प्रतिपक्षविषयताभेदनिवेशे स्वावच्छेदकत्व-स्वावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वान्यतरस-म्बन्धेन ताद्दशजन्यताविशिष्टान्यत्वस्य वा निवेशे साध्यव्यापकाभाव-वत्पक्षस्य बाधतामते वह्निव्यापकाभाववद्वह्निव्यापकाभाववत्कालीनह्रद-पक्षकवह्निसाध्यके वह्निव्यापकाभाववत्ताद्दशह्रदे ऽव्याप्तिर्दुरुद्धरेतिचेन्न सत्प्रतिपक्षविषयताभदवदुक्तबाधविषयताभेदस्यापि प्रवेश्यत्वात् एवं साध्यवदवृत्तिमत्पक्षस्य बाधत्वे तद्विषयताभदोऽपिनिवेश्यएव । न चात्र विशिष्टद्वयाघटितत्वघटितानतिरिक्तवृत्तित्वकल्पापेक्षया गौर-वमितिवाच्यं तत्रापि विशिष्टद्वयविषयतायामसाधारण्यविषयताभे-दस्य सत्प्रतिपक्षादिदिषयताभेदस्य निरुक्तजन्यतानवच्छेदकत्वस्य चावश्यनिवेश्यताया वक्ष्यमाणत्वात् यदातु तदभावस्तदापि यद्रूपा-वच्छिन्नेऽनन्तालक्ष्यभेदानान्निवेश्यताया वक्ष्यमाणत्वात् ।

यत्तु ज्ञानवैशिष्ट्यानवच्छिन्नत्वमेव ज्ञानवैशिष्ट्यावच्छिन्नत्व प्र-कारताविशिष्टप्रकारत्वानवच्छिन्नत्वोभयाभावरूपम्वाच्यं वैशिष्ट्यञ्च स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व स्वा वच्छिन्नप्रतिबन्धकतावच्छेदकत्व स्वनिरूपितविशेष्यतावच्छेदकताव-च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगि-ताकपर्य्याप्तिकावच्छेदकताकत्वैतत्त्रयसम्बन्धेन तथाच गगनाभाववदभा-ववानितिज्ञानीय गगनाभावत्वावच्छिन्नप्रकारताविशिष्टस्य गगनाभा-ववान्ताद्दशघटइतिज्ञानीय गगनाभावत्वावच्छिन्नप्रकारत्वस्य बाधप्र-

तिबन्धकतायामवच्छेदकत्वेन तत्रोभयाभावसत्त्वेन गगनाभाववदभाव-वत्कालीनघटो गगनवानित्यत्र बाधे ऽव्याप्तिविरहात् प्रतिबध्यताविशिष्टान्यत्वादिकन्न निवेश्यमिति तत्तुच्छम् वह्न्यभाववज्जलवद्वृत्तिजल-वद्ध्रदेऽतिव्याप्तेः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामुक्तविषय-ज्ञाननिष्ठायां वह्न्यभाववानभाववानितिज्ञानीयवह्न्यभावत्वावच्छिन्न-प्रकारताविशिष्टस्य वह्न्यभाववान्ह्रदइतिज्ञानीयवह्न्यभावत्वावच्छि-न्नप्रकारत्वस्यावच्छेदकत्वात् निश्चयविशिष्टनिश्चयप्रतिबन्धकता-स्थल एकरूपेणैव प्रतिबन्धकत्वाङ्गीकारात् अन्यथा गगनाभाववदभा-ववत्कालीनघटोगगनवानित्यत्राव्याप्तेरेवाप्रसक्तेरिति।

अत्रोच्यते एकरूपेण निश्चयविशिष्टनिश्चयप्रतिबन्धकत्वं न सम्भवति तत्तदप्रमाण्यज्ञानानामुत्तेजककोटिप्रविष्टत्वेन प्रतिबन्ध-कताभेदकत्वात् नच यद्यदप्रामाण्यज्ञानव्यक्तिसत्वे स्वाव्यवहितो-त्तरक्षणे प्रतिबध्यीभूतज्ञानमुत्पद्यते तत्तदभावकूटस्य प्रतिबन्धक-तावच्छेदकघटकत्वेन प्रतिबन्धकताभेदो न प्रामाणिक इतिवाच्यं ताद्दशकूटत्वस्य दुर्ज्ञेयत्वेन प्रतिबन्धकतावच्छेदकाघटकत्वात् तस्य तथात्वे प्रवृत्तिनिवृत्तिफलककार्य्यकारणभावप्रतिबध्यप्रतिबन्ध-कभावयोर्विलोपापत्तेः।

एवमेकरूपेण प्रतिबन्धकतास्वीकारे गगनाभावदभावत्कालीन-त्वेसति गगनाभाववदभावविशिष्टकालीनघटपक्षके गगनसाध्यकस्थ-ले गगनहेतुकस्थलेच गगनाभाववत्ताद्दशघटेऽव्याप्तिः गगनाभाव-व्याप्यवत्ताबुद्धेरपि निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वात् गग-नाभावव्याप्यवत्ताबुद्धौ गगनाभावधर्मितावच्छेदकीभूतस्याभाववतः प्रकारत्वात् प्रतिबध्यताविशिष्टजन्यतावच्छेदकत्वविरहात्। शब्दैक्या-दरपक्षे गगनाभाववत्ताद्दशघटाद्यनन्तविषयताभेदस्य गौरवापादक-स्यापि यद्रूपावच्छिन्नविषयतात्वव्यापकीभूताभावप्रतियोगितया व्या-प्तिवारणाय ननिवेशसम्भवः तथासति ह्रदोवह्निमानित्यत्र ताद्दश-घटादावतिव्याप्तेः नचासाधारण्यविषयतासत्प्रतिपक्षविषयताभेदवत् बाधस्वरूपासिद्ध्यादिविषयताभेदोपि प्रतियोगिविधया प्रवेशनीय इतिवाच्यं तथासति यद्रूपावच्छिन्नविषयतात्वव्यापकोबाधसत्प्रति-पक्षादिविषयताभेदपञ्चकाभाव इत्यत्र पर्य्यवसानात् तत्र बाधत्वा-दीनां वह्न्यभावज्जलवत्कालीनजलवद्ध्रदादिषु वारणाय बाधत्वादि-

प्रत्येकशरीरे उक्तरीतेरनुसरणीयतया उक्तघटपक्षकगगनादिसाध्यक-स्थले पुनरपि निपातप्रसङ्गात्।

शब्दैक्यानादरपक्षेतु उक्तप्रकारस्य सर्वथा व्यर्थत्वात् यादृशपक्ष-साध्यकस्थले हिदोषज्ञानस्य न निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्ध-कत्वं तादृशस्थले ज्ञानवैशिष्ट्यानवच्छिन्नत्वं प्रतिबन्धकतायां यादृश-स्थले तादृशप्रतिबन्धकत्वं तत्र ज्ञानवैशिष्ट्यावच्छिन्नत्व तत्तद्दोषवि-षयत्वानवच्छिन्नत्वोभयाभाववत्त्वमेव निवेश्य लाघवात् अतएवानति-रिक्तवृत्तित्वानिवेशपक्षेपि शब्दैक्यानादर उक्तरीत्या निवेशसम्भवेन विशिष्टद्वयाघटितत्वस्यैव व्यर्थत्वापत्त्या यत्र सत्प्रतिपक्षाप्रसिद्धि-स्तत्र भिन्नान्तमनुपादेयमेव साध्यादिभेदेन लक्षणभेदादिति पक्षस्प-रित्यज्य भ्रमात्मकज्ञानीयेत्यादिना पक्षान्तरमनुसृतं तथाच शब्दै-क्यादरपक्षमालम्ब्यैव सर्वविचाराणामुपक्रमइतिवक्तव्यं तत्रैकरूपेण प्रतिबन्धकत्वपक्षे गगनाभाववत्तादृशघटेऽव्याप्तिर्दुरुद्धरा एकरूपेण प्रतिबन्धकत्वाभावे च गगनाभाववत्तादृशघटज्ञानस्य निश्चयविशिष्ट निश्चयत्वेन प्रतिबन्धकतायास्समानाभावेनोक्तप्रकारस्य वैफल्यम् अभा-ववान्तादृशघटइतिज्ञानस्यापि विशिष्टनिश्चयत्वेनैव प्रतिबन्धकतयाऽ-भाववत्तादृशघटत्वावच्छिन्नविषयतायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रति-बन्धकतानवच्छेदकत्वविरहेणाभावसत्त्वात् तादृशघटेऽतिव्याप्तिश्च नच यद्रूपावच्छिन्नविषयतायां तादृशघटविषयताभिन्नत्वन्निवेश्यमिति वाच्यं तादृशघटपक्षकाभावाभावसाध्यकस्थले तस्य बाधत्वेनाव्या-प्त्यापत्तेः नच विशिष्टद्वयाघटितत्वपक्षेऽव्याप्तिरतिव्याप्तिर्वोक्तस्थले इतिवाच्यं तत्प्रतीकारस्य तद्विचारावसरे प्रदर्शयिष्यमाणत्वात् नचो-क्तातिव्याप्तिवारणाय प्रतिबध्यताविशिष्टजन्यतानवच्छेदकत्वप्रतियो-गिकाभाव एव निवेश्यो न तत्प्रतियोगितया तादृशप्रतिबन्धकतान-वच्छेदकत्वमपीतिवाच्यं वह्निव्यापकाभाववद्ध्रदेऽव्याप्त्यापत्तेः।

यच्चु वह्न्यभाववज्जलवत्कालीनत्वे सतीत्यादिनोक्तस्थले प्रथ-मसत्यन्तविरहिते जलवत्तादृशह्रदेऽतिव्याप्तेरेवमपि दुर्वारतापत्तेश्च॥ परेतु गोत्वमवृत्तीत्यत्र गोत्ववद्रूपवाधेऽव्याप्तिः गोत्ववानितिज्ञानस्य गोत्वत्वावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकतया गोत्वप्रकारता या एव प्रतिबन्धकतावच्छेदकत्वात् गोत्ववत्त्वावच्छिन्नविषयताया अ-तथात्वादित्याहुः

अत्र प्रतिबन्धकतावच्छेदकत्वं प्रतिबन्धकतावच्छेदकविषयता-विशिष्टत्वं वाच्यं वैशिष्ट्यञ्च स्वतादात्म्य स्वनिरूपितविषयता-तादात्म्यान्यतरसम्बन्धेन तथाच गोत्ववत्त्वावच्छिन्नविषयतावि-शिष्टविषयतायां प्रतिबन्धकतावच्छेदकगोत्वत्वावच्छिन्नप्रकारता-निरूपितविशेष्यतातादात्म्यस्य सत्त्वान्नाव्याप्तिः नच यत्रो-दासीनपदार्थविषयकज्ञानम्बाधादिसम्बद्धोदासीनपदार्थविषयकमे-व नियमेन जायते तत्रोदासीनपदार्थविषयतायाः प्रतिबन्ध-कतावच्छेदकबाधादिविषयतानिरूपितविषयत्वाभिन्नत्वेनोदासीनेऽ-तिव्याप्तिः उदासीनपदार्थश्च विशिष्टद्वयाघटितत्ववार्यस्वरूपो नातः सिद्धान्ते तत्रातिव्याप्तितादवस्थ्यामितिवाच्यं विशिष्टान्त-राघटितत्वेनैव तत्रातिव्याप्तिवारणात् बाधादिज्ञानस्य तद्विषयक-त्वनियमाभ्युपगमे विशिष्टद्वयविषयताशून्यत्वस्य तज्ज्ञाने विरहेण बाधएवाव्याप्तिः स्यादित्यवध्येयम्

ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्व इति अथ ज्ञानवैशि-ष्ट्यावच्छिन्नत्व सत्प्रतिपक्षविषयत्वानवच्छिन्नत्वोभयाभाववत्वं प्रति-बन्धकताविशेषणमस्तु ज्ञानवैशिष्ट्यावच्छिन्नाया अपि सत्प्रतिपक्ष-प्रतिबन्धकतायास्तावता सङ्ग्रहसम्भवेन सत्प्रतिपक्षे दोषासम्भवा-दितिचेन्न जलव्यापकवह्न्यभावकालीनजलवद्ध्रदेऽतिव्याप्तिः निश्च-यविशिष्टनिश्चयावच्छिन्नस्यैकस्यैव प्रतिबन्धकत्वस्य सत्प्रतिपक्ष-निश्चयोक्तविशिष्टविषयकनिश्चययोः सत्त्वात् नच व्यापकसामानाधि-करण्यघटितविशिष्टस्य सत्प्रतिपक्षतानङ्गीकारेण सत्प्रतिपक्षविषय-त्वानवच्छिन्नत्वन्न निवेशनीयं परमसाधारण्येऽव्याप्तिवारणायासा-धारण्यविषयत्वानवच्छिन्नत्वन्निवेशनीयमितिवाच्यम् एकरूपेण प्रति-बन्धकतापक्षे वह्निव्यापकीभूताभावप्रतियोगिशैवालवद्ध्रदेऽतिव्या-प्तेः वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदस्य विशिष्टान्तराघटित-त्वेन वारणसम्भवेपि वह्निव्यापकीभूताभावप्रतियोगिशैवालस्य जल हेतुकस्थलेऽसाधारण्यानात्मकस्य तादृशविशिष्टान्तरत्वस्य च दुरुप-पादत्वेन तेनोक्तविशिष्टस्य वारणासम्भवात् नचासाधारण्यज्ञान-विशिष्टान्तरज्ञानानामेकरूपेण प्रतिबन्धकत्वाभावपक्षावलम्बनस्यावश्य कर्त्तव्यताया विशिष्टद्वयाघटितत्वानिवेशेपि वाच्यतयात्रापि स एवास्तु-पक्षइतिन दोषइतिवाच्यं गगनाभाववदभाववत् कालीनत्वेसति गगना-

भाववदभावविशिष्टवत्कालीनघटपक्षकगगनसाध्यकस्थले बाधनिश्चयतदन्यनिश्चयानामेकरूपेण प्रतिबन्धकत्वपक्षे प्रतिबध्यताविशिष्टजन्यतावच्छेदकविषयित्वानवच्छिन्नत्वस्य पूर्ववन्निवेशेऽपि पूर्ववदेवाव्याप्तेः प्रतिबन्धकताभेदपक्षेऽभाववान्तादृशघट इत्यस्यापि विशिष्टनिश्चयत्वेन प्रतिबन्धकतयाऽभाववत्तादृशघटेऽतिव्याप्तेश्चेति ॥०॥

ननु यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टं तद्रूपावच्छिन्नत्वमेवास्तु लक्षणं वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिप्रसङ्गस्यासम्भवात् विशिष्टाविषयकनिश्चयेऽपि प्रतिबन्धकत्वस्य सत्त्वात् वैशिष्ट्यस्य स्वव्यापकत्वरूपस्य प्रवेशनीयत्वात् ज्ञानवैशिष्ट्यावच्छिन्नत्वन्ननिवेशनीयम् ह्रदाद्येकदेशातिव्याप्तिवारणाय च यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यनिश्चयवृत्तित्वं प्रतिबन्धकत्वे विशेषणं वाच्यं तादृशशून्यत्वं यद्रूपावच्छिन्ननिश्चयविशेषणं तु न वाच्यं तथासति बाधाद्यव्याप्तेः प्रतिबन्धकत्वस्य वह्न्यभाववद्ध्रदकालीनघटादिज्ञानेऽपि सत्त्वात्। नच वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय जलवद्ध्रदे तद्विपरीतप्रतिबन्धकतामादाय वह्न्यभाववज्जलवति चातिव्याप्तिरितिवाच्यम् स्वविशिष्टप्रतिबन्धकताव्यापकत्वस्य संसर्गत्वात् वैशिष्ट्यञ्च स्वतादात्म्य स्वसम्बन्धित्वान्यतरसम्बन्धेन सम्बन्धिता च स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकविषयत्वावच्छिन्नत्व स्वावच्छेदकविषयत्वावच्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन तथाच विपरीतप्रतिबन्धकताया अपि स्वविशिष्टत्वान्नातिव्याप्तिः नच साधारण्ये कागतिरिति वाच्यम् वैशिष्ट्यस्य स्वाभाववत्त्व स्वरूपोभयसम्बन्धेन स्वविशिष्टप्रतिबन्धकताविशिष्टनिश्चयवृत्तिभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन वाच्यत्वात् स्वाभावश्च स्वतादात्म्यापन्नासाधारण्यविषयत्वानवच्छिन्नप्रतिबन्धकतावत्त्व सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व स्वकालीनासाधारण्यविषयताशून्यत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताक इति न दोषः प्रतिबन्धकत्वाधिकरणञ्च प्रमात्मकम्विवक्षितं नातो बाधादिभ्रममादाय बाधादावव्याप्तिः एवञ्च गुणपक्ष·

कद्रव्यभेदसाध्यकस्थले गुणोद्रव्यमितिवाधभ्रमविषयैकदेशेगुणेऽपि नातिव्याप्तिरितिचेन्न किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशू· न्यज्ञानीयत्वस्य प्रवेशे ह्रदाद्येकदेशातिव्याप्तेर्दुरुद्धरत्वात प्रमात्वाघ· टितैतल्लक्षणे प्रमात्वप्रवेशस्याप्यनौचित्यात् वाधविपरीतवाधज्ञानयोरे· करूपेण प्रतिबन्धकत्वपक्षेऽसम्भवापत्तेश्चेति ॥ अत एव स्वव्यापकत्व· सम्बन्धावच्छिन्नस्ववृत्तित्वघटितोभयसम्बन्धेन वैशिष्ट्यवाच्यमिति नातिव्याप्तिरितिनिरस्तम् तथापि वाधविपरीतवाधयोरेकरूपेण प्रति बन्धकत्वे वाधादिष्वसम्भवापत्तेः अभाववत्तादृशघटादावतिप्रसङ्गा पत्तेर्वा एतस्योपेक्षणीयत्वादिति ॥

यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमिति। यद्रूपाव· च्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्च येन सामानाधिकरण्येन विशिष्टोयो यद्रूपावच्छिन्नविषयत्वाव्यापक· विषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयस्तत्वमित्यर्थः जा· तिमद्वान्वह्न्यभाववानितिनिश्चयविशिष्टस्य जलवान्ह्रदइतिनिश्चयस्य जलवान्वह्न्यभाववानितिनिश्चयविशिष्टस्य जातिमाञ्जलवानित्यादि· निश्चयस्याप्रतिबन्धकतया तयोर्वारणायाऽव्यापकविषयताशून्येति।

अथ यद्रूपवृत्तिविषयतैवात्र निवेशनीया व्यर्थमव्यापकविषयताशून्य त्वनिवेशनमितिचेत्प्रागपि यद्रूपवृत्तिविषयतानिवेशस्य सम्भवदु· क्तिकस्य सम्भावितस्थलविशेषे दोषसम्भावनयैव परित्यक्तत्वेन तादृश· सम्भावनाया अत्रापि जागरूकत्वात् तथाहि यादृशपक्षसाध्यकस्थले साध्याभावावच्छेदकधर्मस्य केवलस्य न पक्षांशे भानमपितु किञ्चि· त्पदार्थविशेषितस्यैव तत्र साध्याभाववत्तद्धर्मवद्वृत्तितद्धर्मवत्पक्षे· ऽतिव्याप्तिः तद्धर्मवत्पक्षतावच्छेदकगतसमुदायत्वस्य यद्रूपमध्ये धा रणासम्भवात् तद्रूपवृत्तिविषयत्वाप्रसिद्धेः परस्परस्वावच्छिन्नविष· यताशून्यत्वस्य लक्षणघटकतापक्षेऽलक्ष्यतावच्छेदकोक्तविशिष्टधर्म· वत्पक्षतावच्छेदकगतमुदायत्वस्यापि धारणासम्भवात् किञ्चिद्विशे· षिततद्धर्मवत्पक्षतावच्छेदकगतसमुदायत्वस्य धारणसम्भवेपि तद्रू· पावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यत्वस्य वि· शिष्टज्ञाने सत्त्वात्। अत्र किञ्चित्पदार्थ उक्तविशिष्टघटकाधेयत्वा तिरिक्त एव ग्राह्य उक्तविशिष्टघटकपदार्थविशेषिततज्ज्ञानस्योक्त· विशिष्टज्ञानात्मकत्वस्यैव स्वीकारात् तेनाधेयत्वविशेषिततद्धर्मवत्पक्ष·

तावच्छेदकगतसमुदायत्वमादाय नातिव्याप्तिवारणसम्भवः ॥

यद्वा यत्र स्थलविशेषे बाधज्ञानं नियमतोदोषाघटकानियतवस्तुद्वयविषयकमेव तादृशवस्तुविषयकज्ञानञ्च पदार्थान्तराविशेषितस्वांशकतद्वस्तुविषयकमेकञ्चेत्तादृशवस्त्वन्तरविषयकापरज्ञानकालीनमेवानुमितिप्रतिबन्धकबाधभ्रमरूपमेव चजायते स्वांशे किञ्चित्पदार्थविशेषिततद्वस्तुविषयकञ्च बाधघटकेनापि किञ्चित्पदार्थेन विशेषितस्वांशविषयकं तत्तद्वस्तुज्ञानञ्च नियमेन बाधघटकसकलपदार्थानां विशकलिततया विशिष्टतया वावगाहमानमेवच जन्यते तत्र तत्तद्वस्तुनिष्ठविषयतावच्छेदकधर्मगतसमुदायत्वद्वयमादाय बाधेऽव्याप्तिर्बोध्या ॥

एतेन परस्परस्वावच्छिन्नविषयताशून्यत्वनिवेशस्य दूष्यत्वेन लक्षणाघटकत्वान्नोक्तातिप्रसङ्गसम्भवः अव्यापकविषयताशून्यत्वनिवेशेपि नोक्तातिप्रसङ्गस्य किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वनिवेशनादृते वारणम् एकत्र तन्निवेशेनैवोक्तातिसङ्गवारणसम्भवात् दलान्तरेसार्थक्याय स्थलान्तरन्तत्रैव वा साध्याभाववत्तद्धर्मवत्त्वावच्छिन्नविषयकस्योक्तविशिष्टज्ञानान्यस्य किञ्चिद्विशेषिततद्विषयकत्वान्नियतमाधिकङ्कल्पनीयमित्युक्तानान्नावकाशः अत्रैकत्राव्यापकविषयताशून्यत्वस्यापरत्र रूपवृत्तित्वस्य प्रवेशेपि चातिव्याप्तितादवस्थ्यम् रूपवृत्तिविषयताकस्य बाधभ्रमात्मकस्यापरतादृशज्ञानकालीनस्यैव सम्भवात् अव्यापकविषयताशून्यत्वाच्च बाधघटकविषयताया अव्यापकत्वविरहात् बाधविशिष्टविषयतायाश्चाव्यापकत्वेपि भ्रमे तदभावात् उभयत्राव्यापकविषयताशून्यत्वनिवेशेच तादृशनिश्चयत्वस्य स्वांशेबाधघटकपदार्थावगाहिविशकलितबाधघटकसकलपदार्थावगाहिज्ञानद्वयेऽप्रतिबन्धकेऽव्यापकविषयताशून्येसत्त्वेन तत्तद्वस्तुत्वद्वयस्य धारणासम्भवात् प्रतिबन्धकत्वैक्यपक्षे परस्परविषयताशून्यत्वादिसकलनिवेशपक्षेचास्यदोषस्य सम्भव इतिबोध्यम् ॥ यदिच प्राक्स्थलविशेषकल्पनं युज्यतेऽव्यापकविषयताशून्यत्वस्य ग्रन्थकृता शिष्यबुद्धिवैशद्याय कृतत्वादत्रतु तथात्वाभावेन स्थलोत्प्रेक्षणस्यायुक्तत्वात् अन्यथा निःकारणतदुत्प्रेक्षणस्याव्यापकविषयताशून्यत्वनिवेशदूषकस्यापि सम्भवादित्युक्तिरनुमता स्याद्विदुषान्न तदा निवेशनीयमव्याप-

कविषयताशून्यत्वं यद्रूपवृत्तिविषयताकनिश्चय एव यादृशविशिष्टवि-षयकनिश्चयशब्दार्थो वाच्य इति एवञ्च जलवान्वह्न्यभाववान्वा ह्रदो-जलवान्नवेति संशयवारणायोभयत्र निश्चयत्वनिवेशनम् ।

परन्त्वयमत्रविवेकः विशेषणांशे संशयस्वीकारे यद्रूपाप्रसिद्ध्याऽस-म्भवो न्यथा वह्न्यभाववज्जलवत्कालीनघटत्वादिकमादायातिव्याप्ति-रिति अव्यापकविषयताशून्यत्वनिवेशपक्षेच जलवान्वह्निमान्नवेति सं-शयस्यापि वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयकत्वेनाव्यापकविषय-ताशून्यत्वेन च तद्वारणायैकत्र निश्चयत्वनिवेशनम् उभयत्र च वह्न्यभा-ववत्तेजोभाववद्वृत्तितेजोभाववद्ध्रदो तेजोभाववान्वह्निमान्नवेतिसं-शयं ह्रदस्तेजस्वीनवेति संशयञ्चादायातिव्याप्तिवारणाय नचाव्याप-कविषयता यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वेन निवेशनीया तथाच नोक्तातिव्याप्तिरितिवाच्यं भेदत्वाभावत्वादीना-मखण्डोपाधित्वे तादात्म्येन भेदसाध्यकह्रदपक्षकस्थले भेदभेदवद्-भावभेदवद्वृत्त्यभावभेदवद्ध्रदे स्वरूपतोभेदत्वभेदभेदकोटिकमभाव-भेदवान्भेदोनवेतिसंशयं स्वरूपतोऽभावत्वाभावभेदकोटिकं ह्रदोऽ-भावोनवेतिसंशयञ्चादायातिव्याप्तिवारणाय तत्सार्थक्यसम्भवात् भेद-त्वादीनां सखण्डत्वेतु ह्रदपक्षकतद्व्यक्तिसाध्यकस्थले तद्व्यक्तिभेदवद्घट-भेदवद्वृत्तिघटभेदवद्ध्रदेऽतिव्याप्तिर्बोध्या ॥

अथसामानाधिकरण्यसम्बन्धेन निश्चयवैशिष्ट्यन्नवाच्यमपितु तादात्म्येनैव तथासति संशयान्यत्वरूपन्निश्चयत्वमपि सकृदेव प्रवेश्यं वस्तुतो यद्रूपावच्छिन्नविषयताकत्वे सति यद्रूपावच्छिन्नविषयकत्व-वन्निश्चयत्वमेव प्रवेशनीयं लाघवात् । यत्त्वव्यापकविषयताशून्यत्वनि-वेशनस्यावश्यकतायाः प्रागेव दर्शितत्वेनोक्तविषयतानिरूपकत्वद्वय-शालिनस्समूहालम्बनस्याव्यापकविषयताशून्यत्वविरहेण यद्रूपमध्ये वह्न्यभाववज्जलवत्त्वादेः सन्निवेशासम्भवः न च किञ्चिद्रूपावच्छिन्न-विषयत्वाव्यापकविषयताशून्यत्वमेव विशेषणस्वाच्यं समूहालम्बन-स्यापि वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयित्वाव्या-पकविषयताशून्यत्वसम्भवदतिवाच्यं ह्रदोजलवज्जातिमत्काली-नवह्निमान् जलादित्यत्र तादृशवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्र-देऽतिव्याप्तेः जलवान्तादृशवह्न्यभाववाञ्जलवाञ्जातिमानितिसमू-हालम्बनस्याप्युक्तविशिष्टरूपावच्छिन्नविषयित्वाव्यापकविषयिताशू-

न्यत्ववत्त्वेन यद्रूपमध्ये तादृशवह्न्यभाववज्जलवत्त्वादेर्धारणासम्भवादिति तत्तुच्छम् यद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वस्यैव यद्रूपावच्छिन्नविषयिताविशेषणत्वोपगमेन समानाकारकज्ञानीयविषयितयोरैक्येनाव्यापकविषयिताशून्यप्रत्येकज्ञानीयत्वस्य समूहालम्बनज्ञानीयविषयत्वे सम्भवाद्दोषविरहात् गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटे हेतुमत्पक्षघटितासाधारण्ये चाव्याप्तिवारणं समानाधिकरण्यसम्बन्धेन निश्चयविशेषणत्वपक्षवद्बोध्यमिति चेन्न यादृशस्थलविशेषेऽवच्छेदकधर्मदर्शनविषयालक्ष्यविशिष्टघटकभागद्वयस्य समूहालम्बनज्ञानं कदापि न जायते तत्रोक्तविशिष्टेऽतिव्याप्तेः अव्यापकविषयताशून्यज्ञानीयतत्तद्भागविषयताकत्वस्य प्रत्येकज्ञाने विशिष्टज्ञाने चासत्त्वात् तत्तद्रूपस्य पद्रूपपदेन धर्तुमशक्यत्वादिति ॥

ननु यद्रूपावच्छिन्नविषयताशालिनिश्चयवैशिष्ट्यमनिवेश्यं वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयताया यद्रूपावच्छिन्नविषयतात्वेन तामुपादायातिव्याप्तिवारणसम्भवादिति चेन्न वह्न्यभाववद्ध्रदादावसम्भवापत्तेः गगनाभाववद्गगनाभाववत्कालीनघटेऽव्याप्त्यापत्तेश्च । एतेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्वविवक्षणेनासम्भव इत्युक्तविवक्षा निर्दुष्टेति निरस्तम् उक्तबाधज्ञानस्य निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वाभ्युपगमेन तत्राव्याप्तेर्वारयितुमशक्यत्वात् तज्ज्ञानस्य विशिष्टनिश्चयत्वेन प्रतिबन्धकत्वपक्षेऽभाववत्तादृशघटेऽतिव्याप्तेरेव प्रसङ्गात् नच विशिष्टद्वयाघटितत्वनिवेशेऽप्युक्तासम्भवोऽव्याप्तिरतिव्याप्तिर्वेति वाच्यं तदुपादानबलादेव प्राक्परिष्कृतप्रतिबध्यताविशिष्टजन्यतानवच्छेदकत्वस्य वक्ष्यमाणविशेषणान्तरस्य च विषयताविशेषणत्वलाभेनोक्तदोषाणामुक्तविशेषणवैयर्थ्यस्य च वक्तुमशक्यत्वादिति परमार्थः ।

ये तु ऋजवः तानप्यनु किञ्चिदुच्यते यत्र स्थलविशेषे साध्याभाववत्पक्षविषयकं ज्ञानं यदा यदोत्पद्यते तदा जलवद्ध्रदादिकिञ्चिद्वस्तुविषयकमेव तादृशवस्तुविषयकमपि ज्ञानं बाधविषयकमेव तज्ज्ञानञ्च कदाचिदपि न बाधघटकस्वघटकतत्तत्पदार्थमात्रविषयज्ञानकालीनं तत्राव्याप्त्यापत्तेः यद्रूपपदेन जलवद्ध्रदत्वस्य धारणसम्भवेन तद्रूपावच्छिन्नविषयताशून्यत्वस्य बाधज्ञाने विरहात् वि-

शिष्टद्वयाघटितत्वनिवेशे रूपद्वयमध्ये वह्न्यभाववद्घटत्वजलवद्ध्रदत्वयोर्धारणासम्भवात् वह्न्यभाववद्घटत्वावच्छिन्नविषयतायां वक्ष्यमाणतादृशजन्यतानवच्छेदकत्वादिविशेषणविरहात् स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यवह्नित्वादितत्तद्धर्मावच्छिन्नविषयताकनिश्चयकालीनत्वस्य जलवद्ध्रदत्वावच्छिन्नविषयताकनिश्चये विरहेण यद्रूपमध्ये वह्नित्वादेरपि धारणासम्भवात् जलवद्ध्रदत्वस्यैवोभयथोपादानस्य रूपत्वयोर्भेदविवक्षया वारणसम्भवात् अन्यथा द्विधानिवेशवैफल्यात् ।

नच यत्किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वपक्षस्याभ्यर्हितत्वेन तत्र यद्रूपपदेन वह्नित्वस्यापि धारणसम्भवात् जलवद्ध्रदादिविषयकज्ञानस्यैव वह्न्यभाववद्घटत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वात् वह्नित्वावच्छिन्नविषयकत्वाच्चेतिवाच्यम् निश्चययोर्भेदस्य विवक्षितत्वात् एकदा बाधज्ञानद्वयाभावस्यैव च कल्पनात् ।

यद्वा किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वन्न निवेशनीयमपितु यादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदिका भवति यादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तीयविशेष्यत्वानवच्छिन्नावच्छेदकताकविषयिता तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकतादृशावच्छेदकताकविषयताशून्यत्वमेव तथाच जातिमत्पक्षकस्थले जलवज्जातिमत्त्वावच्छिन्नविषयताके जातित्वादिना तत्तज्जात्यवगाहिज्ञाने तदन्यजातिजातित्वादिगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतावच्छेदसत्वेपि तादृशसमुदायत्वस्य धारणासम्भवात् तदवच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकताया जातिनिष्ठाया विशेष्यत्वावच्छिन्नत्वात् जलत्वसमवायत्वसंयोगत्वजातित्वगतसमुदायत्वस्य धारणसम्भवेपि तदवच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वस्य जातित्वेन तत्तज्जात्यवगाहिनिखिलज्ञानीयविषयतायामेव सत्वेन तादृशविषयतावच्छेदस्य तत्रसत्वासम्भवात् जलत्वह्रदत्वादिगतसमुदायत्वस्य धारणसम्भवेपि तदवच्छिन्नानुयोगिताकपर्य्याप्तीयतादृशावच्छेदकताकविषयत्वत्वस्य जलवान्ह्रदइतिज्ञान एव सत्वाच्चेति तद्धारणीयाया वह्न्यभाववज्जलवद्वृत्तिजलवज्जातिमत्यतिव्याप्तेर्वारणादिति ।

अथैतादृशस्थलस्वीकारे जलवद्भ्रदेऽतिव्याप्तिरितिचेत् प्रकृतपक्ष साध्यहेत्वघटितभिन्नत्वस्य यद्रूपावच्छिन्नविशेषणत्वोपगमान्नाति-व्याप्तिरितिकेचित्। परंतु वाधविषयकं ज्ञानं कदाचिद्घटकालीनज-लवद्भ्रदविषयकं कदाचित्पटकालीनजलवद्भ्रदविषयकञ्च तादृश जलवद्भ्रदज्ञानमपि वाधविषयकमेवान्यत्सर्वं पूर्ववत् कल्पनीयमि-त्येतादृशस्थलएवाव्याप्तिर्वोध्या नच तत्र घटकालीनजलवद्भ्रदेऽति-व्याप्तिः विशिष्टान्तरवाधघटितत्वादिति।

एतेन विशेष्यदल उक्तभेदनिवेशस्यावश्यकत्वे एकविशिष्टाघटि-तत्वघटकविशिष्टेपि तद्भेदो निवेश्योऽस्तेवारणसम्भवादित्युभयत्र गुरुतरघटितत्वघटितभेदनिवेशनगौरवदुस्थमपि नितरान्निरस्तम् अ-त्रभेदानिवेशस्य प्रयोजनाभावात्। अथवा यत्रस्थलविशेषे साध्यव्या-पकाभाववत्पक्षरूपवाधज्ञानान्नियमतो वाधांशे किञ्चित्पदार्थविषयक-मेव जायतेऽन्यत्सर्वं पूर्ववत्तत्र वाधेऽव्याप्तिः वाधविषयतायां लक्ष्यता-वच्छेदकगतसमुदायत्ववृत्तित्वविरहेण वक्ष्यमाणोभयाभावस्य तादृ-शजन्यतानवच्छेदकत्वस्य वासत्वात् विशिष्टद्वयाघटितत्वानिवेशेच पूर्ववदेव वारणसम्भवादितिप्राहुः।

केचित्तु हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिवारणस्य विशि-ष्टद्वयाघटितत्वकल्पे परस्परस्वावच्छिन्नविषयताशून्यत्वनिवेशनै-व सम्भवेन तस्यावश्यनिवेशनीयतया तावतैव गगनाभाववद्-भाववत्कालीनघटादिपक्षकगगनादिसाध्यकस्थलीयवाधादेर्वारणस-म्भवेन प्रतिवध्यताविशिष्टजन्यतानवच्छेदकत्वस्य गुरुतरस्य न-निवेशः कार्य्यं एकविशिष्टाघटितत्वकल्पे च वह्न्यभाववद्भ्र-दादौ ज्ञानवैशिष्ट्यावच्छिन्नप्रतिवन्धकत्वप्रवेशादेवाव्याप्तिवार-णसम्भवेपि तादृशघटपक्षकस्थलीयवाधेऽव्याप्तिवारणाय जन्य-तानवच्छेदकत्वस्यानन्ततादृशवाधविषयताभेदस्य वा निवेशः कार्य्यः एवमसाधारण्यविशेषाव्याप्तिवारणाय गुरुभूतानुगतासाधारण्यत्व-विशिष्टविषयताभेदस्यानन्तासाधारणविषयताभेदस्य वा प्रवेशो-विधेय इत्यस्मिन्नेव पक्षे महागौरवमिति। नच विशिष्टद्वयाघटितत्व-कल्पेऽभाववत्तादृशघटे नीलरूपाभाववन्नीलादावनिव्याप्तिवारणाय तेषां भेदनिवेशस्यावश्यकतया क्वगौरवमितिवाच्यम् उक्तालक्ष्य-विषयकज्ञानानां विशिष्टज्ञानत्वेनैव प्रतिवन्धकतायाः समुचितत्वेन

तद्विषयताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वविरहेणातिव्याप्त्या तेषां भेदनिवेशस्यात्राप्यवश्यकरणीयत्वात् तादृशबाधज्ञानस्यापि विशिष्टनिश्चयत्वेनैव प्रतिबन्धकतया तत्राव्याप्तिविरहेण तत्तद्विषयताभेदनिवेशस्यानावश्यकत्वेऽप्यनन्तासाधारण्यविषयताभेदनिवेशस्यावश्यकरणीयतया गौरवस्य दुर्वारत्वात् ।

यत्त्वेकविशिष्टापरघटितत्वकल्पे यत्त्वतत्त्वयोरननुगततया वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्ववह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वाद्यनन्तधर्मावच्छिन्नविषयत्वाभावकूटस्य निवेशो विशिष्टद्वयाघटितत्वकल्पे च तत्स्थाने वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयत्वाभावस्यैकस्यैव निवेश इति लाघवमिति तन्न प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्त्यभावीयप्रतीयोगितया परम्परानिरूपिता या निश्चयनिष्ठावच्छेदकता तद्विशिष्टविषयताशून्यत्वरूपस्यैकस्यैवाभावस्य प्रवेशात् गौरवविरहात् वैशिष्ट्यञ्च स्वनिरूपितपरम्परावच्छेदकतावत्त्व स्वसमानाधिकरणाव्यापकविषयताशून्यत्वरूपाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वोभयसम्बन्धेन स्वविशिष्टधर्मावच्छिन्नत्वसम्बन्धेनेति । न च सामान्याभावस्यास्वीकारे उक्तनिवेशासम्भवात् कूटनिवेश एव कार्य्यस्तत्रोक्तमेवगौरवमितिवाच्यं सामान्याभावास्वीकारे वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविशिष्टविषयत्वाभावस्याभावात् तस्यापि तत्तद्विषयत्वाभावकूटपर्य्यवसायित्वात् तस्यविशिष्टधर्मावच्छिन्नविषयत्वाभावकूटापेक्षगुरुत्वेन विपरीतगौरवात् परम्परायाः संसर्गत्वानभ्युपगमे निवेशदुःकरत्वस्यापि तवैवं प्रसङ्गादिति वदन्ति ।

तदसत् परस्परत्वावच्छिन्नविषयताशून्यत्वनिवेशस्यालक्ष्यभेदनिवेशापादकस्याग्रेनिराकरणीयत्वात् असाधारण्याव्याप्तिवारकप्रकारान्तरस्य वक्ष्यमाणस्यात्रापिसम्भवादिति ॥

अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तीति प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वे सति प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिष्ठव्यापकतानिरूप-

कमित्यर्थः। अत्र ज्ञानादिगोचरेच्छाऽप्रति विषयस्यैव प्रतिबन्धकतया ज्ञानमात्र एवेच्छानिरूपितप्रतिबन्धकत्वसत्त्वेन यद्रूपद्वयमध्ये वह्नित्वह्रदत्वादेर्ग्रहणसम्भवेन सर्वत्रासम्भवापत्तेः निरुक्तप्रतिबध्यतानिरूपितत्वेन प्रतिबन्धकताविशेषिता। नच ज्ञाननिरूपितप्रतिबन्धकतैव प्रवेश्यतामुक्तप्रतिबध्यतानिवेशो व्यर्थ इच्छाप्रतिबन्धकताया वारणादितिवाच्यं ह्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यभावत्वावच्छिन्नविषयताशालिनिश्चयेप्यभावधर्मिकप्रतियोगितासम्बन्धेन वह्न्यभाववत्ताज्ञाननिरूपितप्रतिबन्धकतायास्सत्त्वेन लक्षणासम्भवापत्तेः। नच प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितत्वनिवेशोऽपि सम्भवदुक्तिक उक्तदोषादिति' तादृशानुमितित्वव्यापकत्वनिवेशः तत्रापि सत्यन्तानुपादाने वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः स्यात्तत्प्रतिबध्यतायास्तादृशानुमितित्वाव्यापकत्वात् अतएव पक्षतावच्छेदकसाध्यतावच्छेदकयोस्तत्र निवेशः कृतः यत्किञ्चिद्धर्मावच्छिन्नविशेष्यत्व यत्किञ्चिद्धर्मावच्छिन्नप्रकारत्वयोः प्रवेशे ह्रदोवह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्घटादित्यत्र तादृशजलवद्ध्रदो वह्निमान् घटाभाववत्तद्व्यक्तिमद्वृत्तितद्व्यक्त्यभावादित्यत्र तादृशतद्व्यक्तिमद्ध्रदे चाव्याप्त्यापत्तेः किञ्चिद्धर्मपदेन घटत्वमादाय तद्धर्मावच्छिन्नविशेष्यकवह्निप्रकारकानुमितिं तद्धर्मावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशाल्यनुमितिञ्चादाय दोषघटकविशिष्टद्वयनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतायास्तादृशानुमितित्वव्यापकत्वस्योपपादानसम्भवात् विशेष्यानिवेशे धूमाभाववद्वृत्तित्ववदयोगोलकसंयोगवद्वृत्त्ययोगोलकसंयोगवद्वह्नौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे च ह्रदोधूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यादिति तन्निवेशः तत्रापि साध्यतावच्छेदकहेतुनावच्छेदकपक्षतावच्छेदकानामुक्तदोषवारणायैव प्रवेशो बोध्यः यत्किञ्चिद्धर्मावच्छिन्ननिरूपितव्याप्त्यादेः प्रवेशे गगनाभाववद्वृत्तित्ववदभाववद्वृत्तित्ववत्कालीनधूमवान् वह्नेरित्यत्र व्यभिचारेऽव्याप्तिः स्यात् गगनत्वावच्छिन्ननिरूपितव्याप्तिविशिष्टवह्नित्वावच्छिन्नप्रकारकग्रहप्रतिबध्यताया गगनत्वात्मककिञ्चिद्धर्मावच्छिन्ननिरूपितव्याप्त्यवगाहितादृशानुमितित्वव्यापकत्वसम्भवादेवमन्यदप्यूह्यम्॥

ननु तादृशानुमित्यवृत्ति यादृशविशिष्टविषयकनिश्चयविशिष्टया-

द्वयविशिष्टविषयकनिश्चयत्वं तादृशविशिष्टद्वयविषयताशून्यत्वमेवो-पादेयमच्छस्प्रतिबन्धकतानतिरिक्तवृत्तित्वान्तोपादानेनेतिचेन्न पर्वत-पक्षकवह्न्यभावव्याप्यसाध्यकपर्वतीयवह्न्यभावहेतुकस्थले पर्वतीयव ह्निमत्पर्वतेऽव्याप्तेः पर्वतीयवह्नित्वावच्छिन्नविषयताशालिनिश्चय-विशिष्टवह्निमत्पर्वतत्वावच्छिन्नविषयताशालिनिश्चयत्वस्य प्रकृतानु-मित्यवृत्तित्वात् प्रकृतपक्षे प्रकृतसाध्यहेत्ववगाहिज्ञानस्य ता-दृशनिश्चयात्मकस्याहार्य्यत्वेनानुमितित्वविरहात् अयञ्च दोषो ग-गनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधे हेतुमत्पक्षघ-टितासाधारण्ये चाव्याप्तिवारणाय परस्परस्वावच्छिन्नविषयताशून्य त्वस्य घटकतया प्रवेशे बोध्यो न चान्यथा प्रतिवध्यताविशिष्टज-न्यतानवच्छेदकत्वस्य विशिष्टद्वयविषयताविशेषणत्वे च वह्न्य-धिकरणवृत्यभावनिरूपितत्वाभावव्याप्यवत्प्रतियोगिताकालीनजल-हेतुकह्रदपक्षकवह्निसाध्यकस्थले वह्निव्यापकाभाववद्ध्रदेऽव्याप्तिः व्यापकाभावत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यधिकरणवृ-त्यभावनिरूपितत्ववत्प्रतियोगितात्वावच्छिन्नविषयताशालिनिश्चय त्वस्य प्रकृतानुमित्यवृत्तित्वात् तादृशविशिष्टद्वयविषयतयोर्जन्य-तानवच्छेदकत्वाच्च बोध्या। अग्रे वक्ष्यमाणस्योभयाभावस्य विशिष्ट-द्वयविषयताविशेषणत्वे च ह्रदः प्रतियोगितासम्बन्धेन धूमाभावव्या-प्यवदभावकालीनत्वे सति प्रतियोगितासम्बन्धावच्छिन्नाभावा-भावव्याप्यवदभावकालीनत्वे सति वा वह्निमान् धूमादित्यादौ धूमा-भावव्याप्यवद्ध्रदे साध्याभाववदवृत्तित्वरूपव्याप्तिघटितायां स्वरूपा-सिद्धावव्याप्तिः धूमाभावत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टा-भावत्वावच्छिन्नविषयतानिश्चयत्वस्य प्रकृतानुमित्यवृत्तितया ता-दृशविशिष्टद्वयविषयतायां धूमाभावव्याप्यवद्ध्रत्वगतसमुदायत्व-वृत्तित्वविरहेणोभयाभावस्यापि सत्वाच्च। अयञ्च दोषो जन्यतानव-च्छेदकत्वस्थाने स्वनिरूपितजनकतावच्छेदकत्व स्वावच्छेदकत्वा-न्यतरसम्बन्धेन जन्यताविशिष्टान्यत्वविवक्षणे तत्र न सम्भवत्यन्य-था कल्पत्रयेपि बोध्यः।

अथ तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानावृत्तित्वान्निवे-श्यं तावतैवोक्तदोषवारणादितिचेन्न वह्न्यभाववद्धूमवत्का-लीनवह्निसाध्यकाभावपक्षकधूमहेतुकस्थले प्रागुक्तस्वरूपासि-

द्धावव्याप्तिः प्रतियोगितासम्बन्धेन धूमवह्निश्चयोत्तरप्रकृतानुमित्युत्पादासम्भवादनुमितेरभावे वह्न्यवगाहित्वात् वह्निमत्तावुद्धेश्च प्रतिबन्धकसद्भावादिति ।

वस्तुतस्तु पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वते वह्न्यभाववज्जलवत्कालीनधूमहेतुकह्रदपक्षकवह्निसाध्यकस्थले च जलवद्ध्रदेऽतिव्याप्तिः स्यादिति विशेष्यदले प्रकृतानुमित्यवृत्तित्वस्य प्रकृतानुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानावृत्तित्वस्य यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वे विवक्षितुमशक्यतया प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वप्रवेशस्यावश्यकतया विशेष्यदलघटकविशिष्टद्वयाघटितत्वघटकप्रतिबन्धकत्वैक्यस्यावश्यविवक्षणीयतायाः अग्रेवाच्यत्वात् द्विधा प्रकृतानुमितित्वव्यापकत्वस्याप्रविष्टत्वेन तत्प्रयोजनानुसन्धानं वायसदशनानुसन्धानसमशीलमेवेति बोध्यम् ।

अथ प्रतिबन्धकतावच्छेदकत्वं स्वरूपसम्बन्धरूपमेव वाच्यं लाघवात् नच वह्नित्वावच्छिन्नविषयताशालिनिश्चयविशिष्टह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वादेः बाधादिप्रतिबन्धकतावच्छेदकत्वेनासम्भवापत्तिरिति वाच्यं प्रतिबन्धकताविशिष्टविषयताशून्यत्वस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वावच्छेदकविषयतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकविषयतावच्छेदकधर्मावच्छिन्नविषयतासामानाधिकरण्योभयसम्बन्धेन ॥ वस्तुतः स्वावच्छेदकत्व स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकविषयतासामानाधिकरण्योभयसम्बन्धेनैव वैशिष्ट्यम्वाच्यम् तेन वह्नित्वह्रदत्वाद्यवच्छिन्नविषयतायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेपि नासम्भवः ॥ नचैवमपि वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिः तद्घटकवह्नित्वजलत्वाद्यवच्छिन्नविषयतायाः असाधारण्यप्रतिबन्धकतावच्छेदकत्वादितिवाच्यम् । अव्यापकविषयताशून्यज्ञानीयविषयत्वस्यैव प्रतिबन्धकतावच्छेदकत्वस्य विवक्षितत्वात् तथाविधवह्नित्वजलत्वाद्यवच्छिन्नविषयतायाः प्रतिबन्धकतानवच्छेदकत्वात् एवञ्च प्रथमकल्पोपि समीचीन एव सएवच यथाश्रुतग्रन्थलभ्यः । नच संयोगवज्जलपक्षकवह्निसाध्यकेसंयोगेन संयोगवज्जलहेतुकस्थलेऽसाधारण्येऽव्याप्तिः संयोगवज्जलत्वेन घटावगाहिनस्संयोगवज्जलं संयोगवज्जलवादित्याका-

रकज्ञानस्य संयोगवज्जलत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्य-त्वात् संयोगवज्जलवत्त्वावच्छिन्नविषयत्वस्याव्यापकत्वेपि तज्ज्ञाने प्रकारांशे भ्रमात्मके विरहात् यद्रूपपदेन संयोगवज्जलत्वस्य धारणस-म्भवात् द्वितीयरूपमध्ये च वह्निव्यापकीभूताभावप्रतियोगिसंयोगवज्ज-लत्वस्यैव धृतत्वादिति वाच्यं यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपा-वच्छिन्नविषयत्वेऽव्यापकत्वस्य विवक्षितत्वात् । न च स्वरूपेण जलव-ज्जलं स्वरूपवज्जलवज्जलकालीनवह्निमान् स्वरूपवज्जलादित्यत्रासा-धारण्येऽव्याप्तिः जलवज्जलं स्वरूपवज्जलवदिति ज्ञाने स्वरूपवज्जलव-ज्जलत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्योक्तस्यापि सत्वेन यद्रूपपदेन स्वरूपवज्जलवज्जलत्वस्य धारणसम्भवादिति वाच्यं यादृश-रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतानिरूपित-यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविष-यत्वस्याव्यापकत्वेन विवक्षितत्वात् विशिष्टपक्षतावच्छेदकस्य प्रकृते-ऽप्रसिद्धत्वेपि जलत्वजलस्वरूपजलत्वगतसमुदायत्वस्य प्रसिद्धत्वेन तस्य स्वरूपवत्त्वजलत्वगतसमुदायत्वस्य च यादृशरूपपदेनोपादान-सम्भवेनोक्तज्ञाने तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेद-कताकविषयतानिरूपिततादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिका-वच्छेदकताकविषयताशून्यत्वविरहात् ॥ वक्ष्यमाणपरस्परस्वावच्छि-न्नविषयताशून्यज्ञानीयत्वस्य यद्रूपावच्छिन्नविषयताद्वयेऽत्रापि विशे-षणत्वेनोपादाने नैतद्दोषावकाश इत्यपि कश्चित् ॥

यत्तु रूपवृत्तित्वोपादानपक्षेऽव्यापकविषयताशून्यत्वनिवेशस्याप्रयो-जनत्वेन स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे दोषैकदेशविषयतामा-दाय सर्वत्रासम्भवोऽनतिरिक्तवृत्तित्वमनिवेश्याव्यापकविषयताशून्य-त्वद्वयस्य निवेशे च विपरीतमेव गौरवमिति तत्तुच्छम् तद्रूपावच्छिन्नवि-षयत्वेऽसाधारण्यविषयताभेदस्य स्वघटकाविषयताव्यावृत्तस्य प्रति-बध्यताविशिष्टजन्यताविशिष्टान्यत्वस्य चावश्यविवक्षणीयस्यात्रापि विवक्षणे दोषस्यासम्भवात् विशिष्टद्वयाघटितत्वस्यैकविशिष्टाघटित-त्वपर्य्यवसितत्वे यद्रूपावच्छिन्नविषयतासामान्ये प्रतिबन्धकतावच्छे-दकत्वस्य विवक्षयाप्युक्तासम्भववारणसम्भवात् असाधारण्यविषय-ताभेदस्यैकदेशविषयताव्यावृत्तस्यानिवेशे जन्यतावच्छेदकत्वस्यैक-देशसाधारण्यप्रतीक्षाया अकृतत्वेपि च न क्षतिः ॥

अत्र नीलोत्पलवान्ह्रदो रक्तदण्डवानित्यत्र बाधेऽव्याप्तिः समानविषयकानुमितिम्प्रति समानविषयकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वेन तस्याश्च विशेषणतावच्छेदकप्रकारकज्ञानत्वेन नीलोत्पलत्वावच्छिन्नविषयकज्ञानस्य रक्तदण्डत्वावच्छिन्नप्रकारकज्ञानस्य च निविष्टतया तत्तद्रूपावच्छिन्नविषयतायाः स्वरूपसम्बन्धरूपप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वे यद्रूपपदेन तादृशरूपद्वयस्य ग्राह्यतया बाधज्ञाने तत्तद्रूपावच्छिन्नविषयताशून्यत्वविरहात् एवं ह्रदः कृतसाध्यतावदिष्टसाधनतावत्पाककालीनवह्निमान् जलादित्यत्राप्यव्याप्तिः चिकीर्षासामग्र्या विशिष्टबुद्धिम्प्रति प्रतिबन्धकतया तस्यां कृतिसाध्यतावत्पाकत्वावच्छिन्नविषयज्ञानस्येष्टसाधनतावत्पाकविषयज्ञानस्य चान्तर्भूततया तादृशपाकत्वरूपधर्मद्वयस्य यद्रूपपदग्राह्यत्वेन तत्तद्रूपावच्छिन्नविषयताशून्यत्वस्यासाधारण्यज्ञाने विरहात्। यदिचोक्तस्थलद्वये विशिष्येच्छात्तेजनकत्वानुरोधेन विशिष्य प्रतिबध्यप्रतिबन्धकभावस्य वक्तव्यत्वेन तत्र प्रकृतानुमितिम्प्रति प्रत्यक्षसामग्र्याश्चिकीर्षासामग्र्याश्च प्रतिबन्धकत्वे सामग्रीकोटौ तादृशनिश्चयद्वयप्रवेशस्यानावश्यकत्वात् अनुमितिसामग्र्या आवश्यकत्वेन तस्याश्च तद्घटितत्वानियमात्तदभावदशायामनुमित्यनुत्पत्तेरिष्टतया तदतिरिक्तप्रत्यक्षादिसामग्रीदशायामनुमित्यनुपपत्तेरयोगान्न दोषसम्भव इत्युच्यते तदापि ह्रदोवह्निमान्कृतिसाध्यतावदिष्टसाधनतावत्पाककालीनजलादित्यत्रासाधारण्येऽव्याप्तिः तत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितिसामग्र्याश्चिकीर्षासामग्रीघटककृतिसाध्यतावत्पाकादिनिश्चयाघटितत्वेन तादृशानुमितिम्प्रति चिकीर्षासामग्र्याः प्रतिबन्धकतायां सामग्रीकोटौ निरुक्तनिश्चयप्रवेशस्यावश्यकत्वात् सामग्रीत्वञ्चैकाविशिष्टापरत्वमेवेति तदवच्छिन्नप्रतिबन्धकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वस्य प्रसिद्धिसम्भवादिति निवेशनीयमेवानतिरिक्तवृत्तित्वं तथासति तादृशनिश्चयत्ववति फलेच्छाविगमकालीननिश्चये सामग्रीप्रतिबन्धकताविरहेण कृतिसाध्यतावत्पाकत्वादेर्यत्पदेनोपादानासम्भवेन नाव्याप्तिसम्भव इतिकेचित्

तदप्यसत् विशेष्यदलघटकाविशिष्टद्वयाघटितत्वघटकप्रति-

बन्धकत्वयोरैक्यस्य वक्ष्यमाणत्वेन सामग्रीप्रतिबन्धकतामादाय दोषस्यासम्भवात् तदनुगमश्च प्रकृतानुमितिप्रतिबन्धकताविशिष्टनिश्चयनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपिताव-च्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्वं समुदायार्थः वैशिष्ट्यञ्च स्ववृत्यभावीयप्रतियोगितयापरस्परानिरूपितत्वसहितेन स्वाभाववत्त्वसम्बन्धेन स्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववन्निष्ठत्वसम्बन्धेन वा स्वाभावप्रतियोगित्वं स्वनिष्ठप्रकारत्वञ्च स्वविशिष्ट विषयतावत्वसम्बन्धावच्छिन्नम्बोध्यं वैशिष्ट्यञ्च प्रथमाभिहितानुगमघटकप्रतिबन्धकतावैशिष्ट्यनियामकसम्बन्धाभ्यामेव बोध्यम् एवञ्च बाधादिप्रतिबन्धकतायाः स्वविशिष्टविषयतावत्वसम्बन्धस्य व्यधिकरणत्वेन नकापिक्षतिः उक्तविशेष्यत्वाभाववन्निष्ठत्वस्य संसर्गानुधावनाद्वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वेपि नक्षतिः विशेष्यत्वाभावश्च प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोबोध्यः नन्वेकरूपेण प्रतिबन्धकत्वस्यैव वह्निव्यापकीभूताभावप्रतियोगिजलं जलवान्ह्रदः वह्निव्यापकीभूताभावप्रतियोगिशैवालं शैवालवान्ह्रद इत्यादिनिश्चयानां लाघवेन वक्तव्यत्वात् ह्रदः शैवालवद्ध्रदकालीनवह्निमान् जलादित्यत्रासाधारण्येऽव्याप्तिः तादृशवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयताया अव्यापकविषयताशून्यज्ञानीयाया इव शैवालवद्ध्रदत्वावच्छिन्नविषयतायास्तादृश्या एकस्यामेव प्रतिबन्धकतायामवच्छेदकत्वात् नच प्रतिबन्धकतावच्छेदकस्यानुगतस्याभावान्नैकरूपेणप्रतिबन्धकत्वमितिवाच्यं निश्चयविशिष्टनिश्चयत्वस्यैव तादृशत्वात् वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वीयतादृशवह्निव्यापकीभूताभावप्रतियोगित्वप्रकारताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन प्रकारतावैशिष्टयञ्च स्वाश्रयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपितविशेष्यतावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन नच परस्परस्वावच्छिन्नविषयताशून्यज्ञानीयत्वस्य तदुभयविषयतायां प्रतिबन्धकतावच्छेदिकायान्न सम्भव इतिवाच्यं हेतुमत्पक्षघटितासाधारण्याव्याप्तिवारणाय असाधारण्यप्रतिबन्धकतातिरिक्तवृत्तित्वस्य विशेषणत्वपक्षे तद्विशेषणस्य प्रयोजनविरहेण दोषापादकत्वस्य वक्ष्यमाणत्वेन च परित्याज्यत्वात् ।

यत्तु तादृशवह्निमत्ताबुद्धिम्प्रति वह्निव्यापकाभावप्रतियोगित्वेन वह्निसामान्याभावव्यतिरेकव्याप्त्यात्मकेन विशिष्टजलबुद्धेरपि जलवद्ध्रदनिश्चयकालीनायाः प्रतिबन्धकत्वस्यानुभविकतया शैवालवद्ध्रदत्वनिष्ठावच्छेदकताभिन्नवह्नित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितविषयतात्वेन वह्निविषयतायास्संसर्गघटकतामुपगम्य तस्याप्येकप्रतिबन्धकत्वोपपादने वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयत्वशैवालवद्ध्रदत्वावच्छिन्नविषयत्वयोः परस्परस्वावच्छिन्नविषयताशून्याव्यापकविषयताशून्यज्ञानीययोरपि प्रतिबन्धकतावच्छेदकत्वस्यापिसम्भव इति ।

तदसत् विशिष्टवह्निव्यापकतायाः शुद्धवह्निव्यापकतायाश्च भिन्नत्वेन तत्तद्विशिष्टाभावप्रतियोगिजलज्ञानीययोर्विशिष्टविषयत्वयोरवच्छेदकत्वस्यैकस्मिन् विशिष्टजलत्वेऽसम्भवात् तत्सम्भव एवचोक्तरीतेरक्षुण्णत्वादितिचेन्न अप्रामाण्यज्ञानोत्तेजकत्वानुरोधेनैकरूपेण प्रतिबन्धकत्वासम्भवस्य पूर्वमेवोक्तत्वात् , विशिष्टद्वयाघटितत्वनिवेशस्यैकरूपेण प्रतिबन्धकत्वाभावपक्षीयतायाएव वाच्यत्वाच्च एकरूपेण प्रतिबन्धकत्वोपगमे द्वितीयक्षणावच्छिन्नध्वंसोवाच्यत्वत्ववानूवाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रतियोगित्वकालीनद्वितीयक्षणावच्छिन्नध्वंसादित्यत्र वाच्यत्वत्वव्यापकीभूताभावप्रतियोगितादृशध्वंसरूपासाधारण्येऽव्याप्तेः वाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रतियोगितात्वावच्छिन्नविषयत्वप्रतियोगित्ववद्द्वितीयक्षणावच्छिन्नध्वंसत्वावच्छिन्नविषयत्वयोः परस्परस्वावच्छिन्नविषयताशून्यज्ञानीयत्वप्रतिबन्धकतातिरिक्तवृत्तित्वाज्जन्यताविशिष्टान्यत्ववक्ष्यमाणोभयाभाववत्वासाधारण्यविषयताभिन्नत्वादीनाम्मध्ये यस्य स्यादुपादेयता तस्य सर्वस्य तत्र सत्वात् तदेकतरनिरूपकनिश्चयविशिष्टापरनिरूपकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतानातिरिक्तवृत्तित्वाच्च ।

नच पृथक्प्रतिबन्धकत्वेपि पक्षधर्मिकहेतुमत्त्वग्रहासाधारण्यग्रहयोरतिरिक्तप्रतिबन्धकत्वे मानाभावः वाच्यत्वत्वव्यापकीभूताभावप्रतियोगित्वेन प्रतियोगित्वग्रहस्य प्रतियोगित्ववत्तया च द्वितीयक्षणावच्छिन्नध्वंसग्रहस्य च परस्परविशिष्टत्वेन क्लृप्तप्रतिबन्धकताकस्य तत्रसत्तया तेनैव प्रतिबन्धककृत्यस्य कार्यानुत्पादस्य निर्वाहात्

तथाच तदसाधारण्याव्याप्तेर्दुर्वारत्वेन तद्वारणाय विशेषणं किमपि वक्तव्यं तस्यालक्ष्यत्वस्वा तच्च प्रतिबन्धकतैक्यपक्षेपि समानमिति वाच्यं तद्विशेषणस्यासाधारण्यघटकविषयताभेदरूपस्यैव वक्तव्यतया सत्यपि प्रतिबन्धकतैक्ये स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षेपि दोषासम्भवादलक्ष्यत्वाङ्गीकारस्याप्युभयत्रैव समानत्वात् । किञ्च प्रतियोगित्वस्य विशेषणान्तरानवच्छिन्ने द्वितीयक्षणावच्छिन्नध्वंसे पक्षभूते प्रकारत्वाविरहात् तादृशपक्षधर्मिकसाध्यवत्ताबुद्धौ पक्षतावच्छेदकव्यापकत्वानवगाहिन्यां पक्षतावच्छेदकाघटकधर्मावच्छिन्नतादृशपक्षविशेष्यकस्य साध्यवत्ताविरुद्धत्वेन गृहीतधर्मप्रकारकस्य साध्याभावप्रकारकस्यवा ज्ञानस्य प्रतिबन्धकत्वाननुभवात् पर्वतत्वव्यापकतानवगाहिनि पर्वतोवह्निमानितिज्ञाने नीलपर्वतोवह्न्यभाववानितिज्ञानस्येव द्वितीयक्षणावच्छिन्नपर्वतोवह्निमानितिज्ञाने द्वितीयक्षणावच्छिन्ननीलपर्वतो वह्न्यभाववानितिज्ञानस्यापि प्रतिबन्धकत्वञ्च केषामप्यभिमतम् एवञ्चासाधारण्यप्रतिबन्धकतायाः प्रकृतानुमितिप्रतिबन्धकेपि वाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रतियोगित्वनिश्चयकालीने स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यप्रतियोगित्ववद्वितीयक्षणावच्छिन्नध्वंसत्वावच्छिन्नविषयकज्ञाने विरहेण यद्रूपमध्ये तादृशप्रतियोगितात्वतादृशध्वंसत्वयोः प्रवेशासम्भवात् विनैव विशेषणप्रक्षेपालक्ष्यत्वाभ्युपगमौ प्रतिबन्धकताभेदपक्षेऽव्याप्तेरसम्भवः ।

यदिचोक्तरीत्या प्रतिबन्धकत्वमानुभविकं देशकालादिधर्मितावच्छेदकस्थले विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नघटो गुणसामान्याभाववानित्यत्र गुणवद्वितीयक्षणावच्छिन्नघटरूपबाधघटितासिद्धौ दोषप्रतिपादकग्रन्थाभिमतञ्च तदापि तादृशप्रतियोगित्वकालीनवाच्यत्वत्वसाध्यकोक्तपक्षकद्वितीयक्षणावच्छिन्नध्वंसहेतुकस्थलेऽसाधारण्येऽव्याप्तिर्दुरुद्धरैव । नच तत्रासाधारण्यनिश्चयस्य पृथक्प्रतिबन्धकत्वासम्भवः, वाच्यत्वत्वसामान्याभावेऽव्याप्यवृत्तित्वग्रहे तादृशाभावनिरूपितव्यतिरेकव्याप्त्यात्मकशुद्धवाच्यत्वत्वव्यापकीभूताभावप्रतियोगित्वविशिष्टज्ञानस्य प्रतिबन्धकत्वासम्भवात् विशेषाभावे चाव्याप्यवृत्तित्वग्रहाभावेन, विशेषाभावनिरूपितव्याप्तिप्रकारकनिश्चयविशिष्टहेतुमत्तानिश्चयत्वेन प्रतिबन्धकत्वस्यावश्यकत्वात् सामान्यनिरूपितव्यापकत्वविशेषनिरूपितव्यापकत्वावगाहिग्रहयोरे-

करूपेण प्रतिबन्धकत्वञ्च प्रागेव ह्युपपादितम् अत्र प्रतियोगित्वं हेतुत्वञ्च स्वपर्य्याप्तप्रतियोगिताश्रयवाच्यत्ववत्त्व स्वरूपान्यतरसम्बन्धावच्छिन्नम्बोध्यं तेन प्रतियोगित्वस्य वाच्यत्वत्वव्यापकीभूताभावप्रतियोगित्वनिर्वाहेण दोषघटकत्वनिर्वाहः। कालविशेषस्य पक्षतावच्छेदकतयोपादानात् ध्वंसत्वावच्छेदेन तादृशवाच्यत्वत्वसाध्यकस्थलेपि प्रकृतानुमितित्वव्यापकसामानाधिकरण्येन बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितासाधारण्यप्रतिबन्धकतामादाय न दोषासम्भवः अन्यथा व्यापकत्वाघटितसम्बन्धेन प्रतियोगित्ववद्ध्वंसत्वेनावच्छिन्नविषयत्वस्याप्रतिबन्धकज्ञानसाधारणत्वेन यद्रूपपदेन तस्य धारणासम्भवात् शुद्धप्रतियोगित्वनिष्ठव्यापकताघटितसम्बन्धेन प्रतियोगित्ववद्ध्वंसत्वावच्छिन्नविषयताशून्यत्वस्यासाधारण्यज्ञाने सत्त्वात् विशिष्टप्रतियोगित्वनिष्ठव्यापकताघटितसम्बन्धेन प्रतियोगित्वरद्ध्वंसत्वावच्छिन्नविषयतायाश्च परस्परस्वावच्छिन्नविषयताशून्यज्ञानीयत्वविरहात्तत्पक्षे दोषोनस्यादिति। इदञ्च तत्पक्षे दोषसम्पत्तय एव असाधारण्यविषयत्वादिभेदनिवेशपक्षेच नोपादेयमेवेतिबोध्यम्।

यदिच सामान्यव्यापकत्वावगाहि विशेषव्यापकत्वावगाहितथाविधानिश्चययोरेकरूपेण प्रतिबन्धकत्वे विशेषस्यानन्ततया विनिगमकाभावेन तत्तद्विशेषव्यापकतावगाहिनिश्चयसामान्यव्यापकत्वावगाहिनिश्चययोरेकरूपेण प्रतिबन्धकत्वस्य वाच्यतया तत्सम्पत्यर्थं तत्तद्विशेषणनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वेन व्यापकताघटकाधिकरणविशेषणनिष्ठविषयताया इव सामान्याभावधर्मिका व्याप्यवृत्तित्वज्ञानाभावस्यापि प्रतिबन्धकतावच्छेदकत्वस्वाच्यमित्यनेकप्रतिबन्धकतावच्छेदकत्वतत्सम्बन्धयोः तत्र तत्र कल्पनापेक्षया लाघवेन सामान्यधर्मनिष्ठावच्छेदकतानिरूपितत्वमात्रविशेषितप्रकारताकबुद्धित्वावच्छिन्नम्प्रति सामान्यव्यापकत्वावगाहितथाविधनिश्चयस्यैकमेव प्रतिबन्धकत्वङ्कल्पनीयमित्युच्यते तदा वाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रतियोगित्वकालीनद्वितीयक्षणावच्छिन्नध्वंसहेतुकस्थल एव प्रागुक्ताव्याप्तिर्बोध्या असाधारण्यज्ञानस्य पृथक्प्रतिबन्धकता च वाच्यत्वत्ववति प्रतियोगित्वाभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानकाले वाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रति

योगित्वप्रकारताशालिनिश्चयविशिष्टप्रतियोगित्वकारकज्ञानत्वेन प्रतिबन्धकत्वासम्भवात् तत्प्रतिबन्धकतायामुक्ताव्याप्यवृत्तित्वग्रहस्याप्युत्तेजकत्वात् तद्दशाव्याप्यवृत्तित्वे प्रतिसंहिते वाच्यत्वत्ववद्वृत्तेरपि प्रतियोगित्वस्याभावे वाच्यत्वत्वव्यापकतायाः कपिसंयोगवद्वृत्तेः कपिविभागस्याभावे कपिसंयोगाव्यापकताया इव गृहीतत्वेन वाच्यत्वत्वतादृशप्रतियोगित्वयोर्विरोधभङ्गात् यत्र यत्र कपिसंयोगस्तत्र कपिविभागाभाव इत्यन्तानां व्यतिरेकानियमदर्शनात् कपिसंयोगाभावनिरूपितव्यतिरेकव्याप्तेः सद्धेतौ कपिविभाग उपपादनीयतया तदनुगुणव्यतिरेकव्याप्तिघटकविशेषणस्य वाच्यत्वात् साध्यसाधनभेदेन भेदस्वीकाराच्चातिप्रसङ्गविरहाद्बोध्या ।

अथ यदि केवलान्वयिसाध्यकस्थलवदेतस्यापि न व्यतिरेकव्याप्तिलक्षणलक्ष्यतेत्यन्यादृशव्यतिरेकव्याप्तिर्नोपपादनीया तथासति प्रागुक्ताव्याप्यवृत्तित्वग्रहस्योत्तेजकतायाम्मानाभावान्नोक्तरीत्यापि दोषसम्भव इति विभाव्यते तदा तद्ध्वंसतद्भ्रदोभयपक्षकवह्नित्वसाध्यके वह्निप्रतियोगिकत्वस्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन वह्नित्वव्यापकीभूताभावप्रतियोगिप्रतियोगत्वकालीनतद्ध्वंसहेतौ वह्नित्वव्यापकीभूताभावप्रतियोगितादृशतद्ध्वंसेऽव्याप्तिराकलनीया अत्र च तद्ध्वंसतद्भ्रदोभयत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्नित्वव्यापकीभूताभावप्रतियोग्यखिलधर्मज्ञानानां तद्ध्वंसतद्भ्रदोभयविशेष्यकेण तद्ध्वंसविशेष्यकेण तद्भ्रदविशेष्यकेण च तत्तद्धर्मप्रकारज्ञानेन विशिष्टानामेकरूपेणैव प्रतिबन्धकत्वस्वाच्यं तद्भ्रदत्वनिष्ठावच्छेदकताभिन्नतद्ध्वंसत्वनिष्ठावच्छेदकताभिन्नोभयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छिन्नविशेष्यतात्वेनैकरूपेण तादृशसकलविशेष्यत्वोपादानसम्भवात् नचानुगमनस्यार्थम् तद्भ्रदत्वावच्छिन्नविशेष्यकबुद्धित्वेन किञ्चित्पदार्थविशेषिताविशेषिततद्भ्रदविशेष्यकसकलज्ञानम्प्रति लाघवेन तद्भ्रदत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकतायास्तद्भ्रदत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नम्प्रति तद्भ्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन किञ्चित्पदार्थविशेषिताविशेषिततद्भ्रदत्वावच्छिन्नविशे-

ष्यताकसकलनिश्चयानां लाघवेन प्रतिबन्धकत्वान्तरस्य च क्लृप्ततया-तावतैव प्रत्येकधर्मिकबुद्धेः प्रतिबन्धकत्वनिर्वाहादैक्यकरणायानिरूपितत्वेन विशेष्यत्वोपादानस्य गौरवमात्रसम्पादकत्वादितिवाच्यं तद्ध्रदतद्ध्वंसोभयघटादिकालीनत्वादिविशेषिततद्ध्रदतद्ध्वंसादिविशेष्यकबुद्धीः प्रति तादृशविशेष्यकविरोधिनिश्चयानामुक्तप्रतिबन्धकताद्वयानाश्रयाणां प्रतिबन्धकत्वान्यतिरिक्तानि क्लृप्तप्रतिबन्धकत्वाश्याङ्कल्पनीयानि तत्र विशेष्यतायास्तत्तदवच्छेदकत्वानिरूपितत्वमात्रेणोपादाने तद्ध्रदत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्ननिरूपितप्रतिबन्धकत्वतद्ध्वंसत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्ननिरूपितप्रतिबन्धकत्वयोरकल्पनेन लाघवात् शुद्धतद्ध्रदविशेष्यकबुद्धिम्प्रति तद्ध्रदविशेष्यकनिश्चयस्य प्रतिबन्धकतायाः प्रागुदितप्रतिबन्धकताद्वयघटकचरमप्रतिबन्धकतया निर्वाहसम्भवात् तत्क्षणविशिष्टतादृशोभयविशेष्यकबुद्धिम्प्रत्यपरक्षणविशिष्टतादृशोभयविशेष्यकनिश्चयस्य प्रतिबन्धकतावारणाय तादृशानिरूपितत्वेन विशेष्यतायाः प्रतिबन्धकतावच्छेदकघटकताया अवश्यम्वाच्यत्वेन तत्प्रयुक्तगौरवस्यासम्भवात् तद्ध्रदस्य धर्मिणएकत्वेन शुद्धे विशिष्टे वा तत्राव्याप्यवृत्तित्वग्रहस्य प्रतिबन्धकताभेदेपि तत्तत्प्रतिबन्धकतायामुत्तेजकत्वस्यावश्यकतया तदभावे प्रतिबन्धकतावच्छेदककल्पनप्रयुक्तगौरवस्यापि प्रतिबन्धकतैक्यपक्षे ऽसम्भवात्।

अथ प्रतिबन्धकताभेदपक्षे कथमसाधारण्यनिश्चयस्यातिरिक्तप्रतिबन्धकतासम्भव इतिचेत् तद्ध्वंसे वह्नित्वाभावस्याव्याप्यवृत्तित्वग्रहदशायां तद्ध्वंसवान्तद्ध्रदइतिनिश्चयविशिष्टासाधारण्यनिश्चये तद्ध्वंसधर्मिकप्रतियोगित्वप्रकारकनिश्चयविशिष्टप्रतियोगित्वधर्मिकवह्नित्वव्यापकीभूताभावप्रतियोगित्वनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वस्यासम्भवेन तद्भिन्नप्रतिबन्धकत्वस्यावश्यंवक्तव्यतया तत्सम्भव इतिगृहाण एवञ्च तत्प्रतिबन्धकतामादायासाधारण्ये लक्षणसम्भवः तत्प्रतिबन्धकताया उपदर्शितनिश्चयत्वव्यापकत्वासम्भवेन यद्रूपमध्ये तादृशप्रतियोगित्ववत्प्रतियोगितात्वस्य प्रतियोगित्ववत्तद्ध्वंसत्वस्य च धारणासम्भवादित्यास्ताम् वस्तुतो नैकरूपेण प्रतिबन्धकतायास्सम्भवोपि विस्तरेण तस्यप्रागेव निराकृतत्वात्।

यत्तु व्यतिरेकव्याप्तिघटकहेत्वभावप्रतियोगित्वस्य हेतुतावच्छेद-

कावच्छिन्नस्यैव वाच्यतया हेतुतावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगित्वप्रकारकग्रहस्याप्रतिबन्धकतया प्रतियोगित्वप्रकारताया हेतुतावच्छेदकावच्छिन्नत्वावच्छिन्नत्वेनैव प्रवेशनीयत्वान्नैकरूपेण प्रतिबन्धकत्वस्यैव सम्भव इति तन्न स्वीयसाध्यव्यापकीभूताभावप्रतियोगित्वप्रकारताविशिष्टप्रकारताकविशेष्यताविशेषनिरूपितत्वस्यैव निश्चयवैशिष्ट्यघटकतयोपादानात् वैशिष्ट्यं स्वनिरूपितत्वस्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टविशेष्यतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्सम्बन्धावच्छिन्नत्वोभयसम्बन्धेन बोध्यम् ॥

अथ प्रतिबन्धतैक्यस्य वृत्त्यनियामकसम्बन्धे प्रतियोगितावच्छेदकत्वं विशेषरूपेण संसर्गत्वं वा स्वीकृत्योपपादितत्वेन तयोरभावे प्रतिबन्धकतैक्यमेवादरणीयम् तत्र च तादृशप्रतिबध्यताविशिष्टनिश्चयनिष्ठावच्छेदकतानिरूपितपरम्परावच्छेदकतावद्रूपवत्त्वं समुदायार्थः वैशिष्ट्यञ्च निरूपितप्रतिबन्धकतान्यूरयभावीयप्रतियोगितया परम्परानिरूपितत्वस्वावच्छेदकाविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयताशून्यवृत्तित्वोभयसम्बन्धेन निश्चयनिष्ठावच्छेदकतावैशिष्ट्यञ्च पूर्ववद्बोध्यम् एवञ्च बाधादिप्रतिबध्यतावच्छेदकीभूतधर्मावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वस्य प्रसिद्धत्वान्न क्षतिः तथासति ह्रदो वह्निमान् कृतिसाध्यतावदिष्टसाधनतावत्पाककालीनजलादित्यत्र प्रागुक्ताव्याप्तिस्सुस्थिरैव पूर्वपक्षे ।

यत्तु ज्ञानसामान्यंप्रत्येवेच्छासामग्र्या विरोधितया न तत्प्रतिबध्यतावच्छेदकाविषयत्वमिति नाव्याप्तिरिति तन्न इच्छासामग्र्यामिच्छोत्तेजकत्वानुरोधेन प्रतिबध्यतावच्छेदकतया विषयत्वोपादानस्यावश्यकत्वात् प्रतिबध्यतायामिच्छोत्तेजकतापक्षो हि सत्प्रतिपक्षे भट्टाचार्येण निगूढन्दूषितोऽस्माभिश्च व्युत्पत्तिवादगूढार्थतत्त्वालोके सच दोषः स्पष्टीकृत इति चेन्न प्रतिबध्यतावच्छेदकतापर्य्याप्त्याधिकरणधर्मपर्य्याप्तावच्छेदकताकत्वस्य विवक्षितत्वात् इच्छासामग्रीप्रतिबध्यतायास्तत्तद्विषयकप्रत्यक्षविशेषत्वानुमितित्वशाब्दत्वाद्यवच्छिन्नत्वात् विपरीतनिश्चयनिरूपितप्रतिबध्यतायाश्च प्रत्यक्षविशेषत्वप्रत्यक्षान्यवि-

शिष्टबुद्धित्वाद्यवच्छिन्नत्वात् प्रकृतानुमितित्वव्यापिकायाः प्रत्यक्षान्य-विशिष्टबुद्धित्वावच्छिन्नायाः असाधारण्यनिश्चयनिरूपितप्रतिबध्यता-या अवच्छेदकतापर्य्याप्त्यधिकरणधर्म्मपर्य्याप्तावच्छेदकताकत्वस्ये-च्छासामग्रीप्रतिबध्यतायास्विरहादव्याप्त्यसम्भवात् अवश्यविव-क्षणीयतयासाधारण्यविषयताभिन्नत्वस्यासाधारण्यघटकविषयता-भिन्नत्वरूपस्य वा विवक्षितत्वादुक्तदोषस्यासम्भवादितिचेत् ।

अत्रोच्यते गगनाभाववत्कालीनघटो गगनवानित्यत्राभाववत्ताह-शघटेऽतिव्याप्तिः ताहशघटज्ञानस्य विशिष्टबुद्धित्वेन प्रतिबन्धकत्वेना भाववत्ताहशघटत्वावच्छिन्नविषयताया ज्ञानवैशिष्ट्यावच्छिन्नप्रति-बन्धकतावच्छेदकत्वासम्भवेन यद्रूपपदेन ताहशघटत्वस्य धारणा-सम्भवात्, यदि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता न निवेश्यते तदा यद्रूपवृत्तिविषयतानिवेशपक्षेऽसाधारण्यविषयताभिन्नत्वसहितस्यो-क्तजन्यताविशिष्टान्यत्वस्य वक्ष्यमाणोभयाभावस्य वा विवक्षायामपि-ह्रदो वह्निमानित्यत्र वह्निव्यापकीभूताभाववह्नदरूपबाधे वह्नित्वगतैकत्वंह्र-दत्वगतैकत्वञ्चादायाव्याप्तिः एवं किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापक विषयताशून्यत्वनिवेशपक्षेपि यद्रूपावच्छिन्नविषयत्वाव्यापकविषय-ताशून्यत्वनिवेशपक्षेपि साध्यव्यापकाभावविषयकंपक्षविषयकञ्च ज्ञा-नं यत्र स्थले नियमेनैव ताहशाभावपक्षोभयविषयकमेव तत्र सा-ध्यव्यापकाभाववत्पक्षरूपबाधेऽव्याप्तिः, साध्यव्यापकाभावत्वपक्षताव च्छेदकयोर्यत्पदार्थत्वसम्भवात् पक्षांशे साध्यव्यापकाभावत्वेन पदा-र्थान्तरावगाहिज्ञानस्य तत्तद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशू-न्यतया तदीयतत्तद्रूपावच्छिन्नविषयत्वस्य स्वरूपसम्बन्धरूपप्रतिब-न्धकतावच्छेदकत्वसम्भवात् अनतिरिक्तवृत्तित्वस्य निवेशेच तत्तद्रूपा-वच्छिन्नविषयताशालिसमूहालम्बने प्रतिबन्धकताविरहेण तत्तद्रूप-स्य यत्पदार्थत्वस्यासम्भवान्नाव्याप्तिः एवमेवंरीत्या साधारण्येपि स्थलविशेषेऽव्याप्तिर्वक्ष्यमाणाऽत्रापि बोध्या। विशिष्टद्वयाघटितत्वस्यै-कविशिष्टाघटितत्वपर्य्यवसायित्वपक्षेपि यत्रस्थले साध्यव्यापकीभूता भावप्रतियोगिहेतुविषयकं ज्ञानान्नियमतो हेतुमत्पक्षकाविषयकमेव-तत्र हेतुमत्पक्षविषयतासामान्यस्यैवासाधारण्यघटकविषयता-भिन्नस्यासाधारण्यप्रतिबन्धकतावच्छेदकतया तद्विषयताशून्यत्व-स्यासाधारण्यज्ञाने विरहात् असाधारण्ये ऽव्याप्तिः, अनतिरिक्त-

वृत्तिनिवेशे च, प्रतिबन्धकताशून्येऽपि हेतुमत्पक्षविषयकनिश्चयत्वसत्वेन यत्पदेन हेतुमत्पक्षतावच्छेदकस्योपादानासम्भवान्नाव्याप्तिः ॥

वस्तुतस्तु ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वस्याप्रवेशो यद्रूपावच्छिन्नविषयताशालिनिश्चयवैशिष्ट्यस्योपलक्षणतयैव प्रवेशेन तत्र प्रतिबन्धकतावच्छेदकत्वस्य लक्षणाघटकतया जन्यतानवच्छेदकत्वपक्षस्यापि दूष्यतया च शैवालवज्जलपक्षकजलाभावसाध्यके बाधेऽव्याप्तिः शैवालत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टशैवालवज्जलत्वावच्छिन्नविषयताशालिनिश्चयत्वस्य प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्वात् शैवालवज्जलत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य शैवालवज्जलत्वावच्छिन्नविषयताशालिनि शैवालवज्जलविशेष्यके जलत्वेन वस्त्वन्तरप्रकारकेज्ञाने प्रतिबन्धकतावति सत्वात् निरुक्तरूपद्वयावच्छिन्नविषयताद्वयस्यासाधारणघटकाविषयताभिन्नत्वात् वक्ष्यमाणोभयाभाववत्वाच्च तदुभयशून्यत्वस्य बाधज्ञाने विरहात् उक्ताव्याप्तिवारणोपायस्यानितिरिक्तवृत्तित्वाल्लघुभूतस्यासत्वादिति । यदा तु हेतुमत्पक्षघटितासाधारण्ये दोषस्यान्यथैव वारणं वक्ष्यते नत्वसाधारण्यघटकाविषयताभिन्नत्वनिवेशमालम्ब्य तदा ह्रदो जलकालीनवह्निमाञ्जलादित्यत्रासाधारण्येऽव्याप्तिः जलत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टतादृशवह्निव्यापकीभूताभावप्रतियोगितात्वावच्छिन्नविषयताशालिनिश्चयत्वस्य प्रतिबन्धकतावच्छेदकत्वात् तादृशप्रतियोगितात्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य तादृशप्रतियोगितात्वावच्छिन्नविषयताके तादृशप्रतियोगितात्वेन घटादिप्रकारकजलविशेष्यके प्रतिबन्धकज्ञाने सत्वात् स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वपरिष्कारे च दोषोऽन्वेष्टव्य एवं यद्रूपवृत्तित्वनिवेशपक्षे, किञ्चिद्धर्मावच्छिन्नविषयत्वाव्यापकाविषयताशून्यत्वपक्षे च बाधादावसम्भव, एवं बोध्यः इत्येषादिगित्युपरम्यते ॥

ननु गगनवदभावो गगनाभाववद्ध्रदवृत्तिकरणनिरूपितवृत्तित्वकालीनवह्निमाञ्जलादित्यत्रासाधारण्येऽव्याप्तिः प्रकृतानुमितित्वव्यापकगगनत्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः गगनाभाववत् तादृशवृत्तित्ववत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टतादृशवृत्ति-

त्ववदभावत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकतयाऽसाधारण्यनिश्चये तादृशविशिष्टद्वयविषयताशून्यत्वविरहादितिचेन्न विशेष्यदलघटक विशिष्टद्वयाघटितत्वघटकप्रतिबन्धकतयोरैक्यस्यविवाक्षितत्वात् तथासति तादृशप्रतिबन्धकताविशिष्टरूपवत्वंसमुदितलक्षणार्थः वैशिष्ट्यञ्च स्वविशिष्टनिश्चयनिष्ठाच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकतानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वसम्बन्धेन स्ववैशिष्ट्यञ्च स्ववृत्त्यभावीयप्रतियोगितया परम्परानिरुपितत्वघटितेन स्वाभावसामानाधिकरण्यघटितेन चोभयसम्बन्धेन। स्वाभावश्च स्ववृत्यभावीयप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकतावविशिष्टविषयतावत्वसम्बन्धेन अवच्छेदकतावैशिष्टयञ्च स्वनिरुपितावच्छेदकतावद्विषयतावच्छेदकावच्छिन्नत्व स्वनिरुपितसामानाधिकरण्यसम्बन्धावछिन्ननिश्चयनिष्ठावच्छेदकतानिरूपितावच्छेदकतावद्विषयतावच्छेदकतावच्छिन्नविषयतासामानाधिकरण्योभयसम्बन्धेन एवञ्च बाधप्रतिबन्धकताया निश्चयविशिष्टविशिनिश्चयत्वाव्यापकत्वेपि न क्षतिः।

यद्वा प्रतिबध्यताविशिष्टरूपवत्त्वमेव समुदायार्थोवाच्यः वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावृत्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्वस्वावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्यभावीयप्रतियोगितानिरूपितपरम्परानिश्चयनिष्ठावच्छेदकताविशिष्टविषयताशून्यप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन अवच्छेदकतावैशिष्ट्यञ्च पूर्वोक्तसम्बन्धेन तथाच बाधप्रतिबध्यतावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताया निश्चयविशिष्टविश्चयत्वव्यापकत्वसम्भवेन न कापिक्षतिः॥ नच प्रतियोगित्वम्वह्निमद्वह्न्यभाववद्वह्न्यधिकरणवृत्यभावनिरूपितत्ववत्कालीनजलादित्यत्रासाधारण्येऽव्याप्तिः असाधारण्यप्रतिबध्यतावच्छेदकधर्मावच्छिन्नवह्निमत्प्रतियोगित्वबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताया वह्न्यभाववत्तादृशनिरूपितत्ववत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टतादृशनिरूपितत्ववत्प्रतियोगितात्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकतया ऽसाधारण्यनिश्चये तादृशधर्मावच्छिन्नविषयताद्वयशून्यत्वविरहादिति वाच्यम् प्रतियोगितात्वावच्छेदेन प्रतियो-

गितात्वसामानाधिकरण्येन वा वह्निस्साध्यतायां प्रकृतानुमितित्वव्यापकसामानाधिकरण्येन वह्निमत्वबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय लक्षणसम्भवात् तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः प्रतियोगितात्वावच्छेदेन तादृशनिरूपितत्वावगाहिनिश्चयविशिष्टवह्न्यभाववत्तादृशनिरूपितत्ववत्त्वावच्छिन्नविषयताशालिनिश्चयत्वस्यैव व्यापकतया तादृशविशिष्टद्वयविषयताशून्यत्वस्यासाधारण्यनिश्चये सत्वात् तस्य प्रतियोगितात्वावच्छेदेन तादृशनिरूपितत्वानवगाहित्वादिति ।

अत्रेदमवधेयम् प्रतिबध्यतैक्यपक्षे द्वितीयक्षणावच्छिन्नोध्वंसो वाच्यत्वत्ववान् वाच्यत्वत्वाभाववत्प्रतियोगित्ववत्कालीनतादृशध्वंसात् वाच्यत्वत्वव्यापकीभूताभावप्रतियोगिप्रतियोगित्वकालीनतादृशध्वंसाद्वेत्यादावसाधारण्येऽव्याप्तिर्दुरुद्धरैवेति प्रतिबन्धकतैक्यपक्ष एवादरणीयः नच तत्र वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वम्विना विशेषरूपेण संसर्गत्वाभ्युपगमम्विनावा न गतिर्नचतत्स्वीक्रियेत इतिवाच्यं वक्ष्यमाणपरस्परस्वावच्छिन्नविषयताशून्यत्वनिवेशपक्षे धूमाभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वादिव्यापकत्वस्य बाधादिप्रतिबन्धकतायां सत्त्वेनोक्तहृदत्वात्मकरूपद्वयावच्छिन्नविषयताशून्यत्वस्य बाधादिनिश्चये सत्वेन बाधादावव्याप्त्यसम्भवात् स्वाभाववत्त्वस्य प्रतिबन्धकताविशिष्टत्वघटकसंसर्गत्वानभ्युपगमात् वक्ष्यमाणोभयाभावविवक्षायां घटकालीनवह्न्यभाववद्ध्रदत्वपटकालीनवह्न्यभाववद्ध्रदत्वे यद्रूपपदेनोपादाय लक्षणसङ्गतिराकलनीया वक्ष्यमाणजन्यतानवच्छेदकत्वपक्षेपिच न दोषसम्भवः तथाहि ह्रदत्वावच्छेदेन वह्निस्साध्यतायां ह्रदत्वसामानाधिकरण्येन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः तादृशह्रदो वह्न्यभाववानित्यनुमितिनिष्ठजन्यतायास्तादृशप्रतिबध्यताविशिष्टत्वात् ह्रदत्वावच्छेदेन वह्निमत्ताबुद्धिम्प्रति तादृशह्रदो वह्न्यभावव्याप्यवानिति निश्चयस्य तादृशह्रदोवह्न्यभाववानितिबुद्धिम्प्रति ह्रदत्वावच्छेदेन वह्निव्याप्यवत्त्वबुद्धेश्च प्रतिबन्धकत्वात् तथासति निरुक्तजन्यतानवच्छेदकत्वस्य तादृशह्रदो वह्न्यभाववानित्यनुमितीय जलवद्ध्रदत्वावच्छिन्नविषयतायाम्विरहेण तादृशविषयताद्वयशून्यत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्र·

दत्वावच्छिन्नविषयताकत्वस्य यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य च वह्न्यभावत्वेन घटाभावाद्यवगाहिनिरुक्तानुमितौ प्रकृतानुमितिप्रतिबन्धिकायां सत्त्वात् अतः स्वनिरूपितप्रातिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणपर्य्याप्तावच्छेदकताकजनकत्वस्यैव वैशिष्ट्यघटकतया प्रवेशोऽङ्गीकार्यः तथाच ताद्दशह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावत्वावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतायां निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्निभावव्याप्यत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया वा अवच्छेदकतापर्य्यप्त्यधिकरणधर्म्मपर्याप्तावच्छेदकताकत्वविरहान्नातिव्याप्तिः एवञ्च वह्न्यभाववद्ध्रदत्वह्रदत्वादीनां यद्रूपपदेनोपादानसम्भवात्, वह्न्यभाववद्ध्रत्वात्मकतद्रूपावच्छिन्नविषयत्वस्य वह्न्यभाववद्ध्रदो जलवानितिज्ञानीयस्य ताद्दशजन्यतानवच्छदकत्वेनतत्सहितह्रदत्वाद्यवच्छिन्नविषयताशून्यत्वस्य वह्न्यभाववान्ह्रदइति ज्ञाने सत्त्वाल्लक्षणसङ्गतिः ॥

अथ ह्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वस्य बाधप्रातिबन्धकतायां सत्त्वेन बाधेऽव्याप्तिः नचोक्तनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकतात्वापेक्षया निश्चयवैशिष्ट्याघटितताद्दशावच्छेदकतात्वस्य लघुत्वेन प्रतियोगितावच्छेदकतयोक्तावच्छेदकतात्वावच्छिन्नाभावो ऽप्रसिद्ध एवेतिवाच्यं ह्रदत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यह्रदत्वावच्छिन्नविषयताशालिनिश्चयवैशिष्ट्ये ताद्दशवैशिष्ट्याघटितताद्दशावच्छेदकतात्वावच्छिन्नाभाववत्त्वेन ताद्दशावच्छेदकतात्वस्यातिप्रसङ्गाद्यापादकत्वेनानवच्छेदकत्वात् ।

यत्तु परस्परयद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वस्विवक्षणीयम् तथाच वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायास्विरहान्न दोषः नचाननुगमः प्रकृतानुमितिप्रतिबन्धकताविशिष्टनिश्चयनिष्ठावच्छेदकताविशिष्टविषयताशून्यत्वस्य विवक्षितत्वात् प्रथमवैशिष्ट्यञ्च स्ववृत्त्यभावीयप्रतियोगितापरस्परानिरूपितत्वस्ववृ-

त्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन स्ववैशिष्ट्यञ्च स्वनिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयताशालिनिश्चयसामानाधिकरण्यस्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयताकत्वोभयसम्बन्धेन व्यापकता च स्वनिरूपितप्रतिबध्यतावत्प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्बन्धत्वेन द्वितीयवैशिष्ट्यञ्च प्राग्वदिति तत्तुच्छम् वह्न्यभावद्ध्रदत्वमेवोभयथा यद्रूपपदेनोपादाय दोषस्य सम्भवात्। नच वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्धिरितिवाच्यं गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे यद्रूपवृत्तिविषयतानिवेशपक्षे वह्न्यभाववज्जलवत्कालीनह्रदपक्षकवह्निसाध्यकस्थले जलवत्तादृशह्रदेऽतिव्याप्तेः वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवत्तादृशह्रदत्वावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धेः यद्रूपपदेन जलवत्तादृशह्रदत्वस्योपादानासम्भवात् जलवद्ध्रदत्वस्य च ह्रदत्वव्यापकजलप्रतियोगिकसम्बन्धघटितस्यैवोपादेयतया तद्रूपावच्छिन्नविषयताशून्यत्वस्य जलवत्तादृशह्रदत्वावच्छिन्नविषयताशालिनिश्चये सत्वात् अतोगुरुधर्मस्य प्रतियोगितावच्छेदकतायाः प्रकारान्तरस्य वानुसर्त्तव्यतया वह्न्यभाववद्ध्रदत्वादिकमुपादायासम्भवस्य सम्भवात् अव्यापकीभूतविषयताशून्यत्वनिवेशपक्षे यद्यपि गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारे नास्तिप्रयोजनं,तथापि तदङ्गीकारस्य दीधितिकृत्सिद्धान्तत्वं गगनाभाववदभाववत्कालीनघटपक्षकगगनसाध्यके बाधेऽव्याप्तिश्चेति चेदत्रकेचित्।

प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टत्वान्यत्वस्य तादृशजन्यताविशिष्टान्यत्वपर्यन्तस्य प्राक्परिष्कृतस्य विशिष्टद्वयविषयताविशेषणत्वे प्रागुक्तासम्भवस्य वारणसम्भवात्।

यत्त ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य विषयता

विशेषणत्वे नोक्तदोषइति तन्न गगनाभाववदभाववत्कालीनघटो गग-नवानित्यत्र गगनाभाववत्तादृशघटेऽव्याप्तेः तज्ज्ञानस्य निश्चयविशि-ष्टनिश्चयत्वेनैव प्रतिबन्धकत्वात् विशिष्टनिश्चयत्वेन प्रतिबन्धकत्वे चा-भाववत्तादृशघटेऽतिव्याप्तेः जन्यतानवच्छेदकत्वविवक्षणे चाभाव-वान्तादृशघटइतिज्ञानीयविशिष्टद्वयविषयतायास्तादृशत्वेन तच्छू-न्यत्वस्य तज्ज्ञाने विरहात गगनाभाववान्तादृशघटइति ज्ञानस्य ता-दृशविषयताद्वयशून्यत्वेऽप्यभाववत्तादृशघटत्वावच्छिन्नविषयत्वाव्या-पकविषयताशून्यत्वविरहादतिव्याप्त्यसम्भवात् यद्रूपावच्छिन्नविष-यत्वाव्यापकविषयता शून्यत्वस्यापि निर्दोषत्वप्रकारस्य प्रागभिहि-तत्वात् किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वस्य विव-क्षितत्वेपि विशिष्टद्वयविषयतायां यद्रूपवृत्तित्वतादृशजन्यताविशिष्ट त्वोभयाभावस्य विशेषणतया विवक्षितत्वात् गगनाभाववान्तादृशघ-टइतिज्ञाने गगनाभाववद्धटत्वात्मककिञ्चिद्रूपावच्छिन्नविषयित्वाव्या-पकविषयिताशून्यत्वस्याभाववत्तादृशघटत्वगतसमुदायत्वावच्छिन्ना-नुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्य च सत्वेपि तज्ज्ञानीयाया जन्यतावच्छेदिकाया अपि विषयताया उक्तसमुदाय-त्ववृत्तित्वविरहेणोभयाभाववत्तयोक्तज्ञानस्य तादृशविषयताद्वयशू-न्यत्वविरहादतिव्याप्तेर्वारयितुशक्यत्वात्। नचाननुगमः तादृशप्रति-बन्धकताविशिष्टरूपावच्छिन्नवत्त्वस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्व-वृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्वस्वविशिष्टप्र तियोगिताविशिष्टान्यत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्ववृत्त्यभावी-यप्रतियोगितानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयतात्वाव-च्छिन्नत्वसम्बन्धेन अवच्छेदकतावैशिष्ट्यञ्च विषयतायां पूर्वोक्तस-म्बन्धेन प्रतियोगितावैशिष्ट्यञ्च स्वविशिष्टनिरुक्तोभयाभावीयता दृशजन्यताविशिष्टत्वत्ववृत्तितात्वोभयधर्मावच्छिन्नप्रतियोगितानिरूपि-तानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वस्वनिरूपकाभाववत्प्र-तीतिविषयतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितानवच्छेदक-त्वोभयसम्बन्धेन प्रतियोगितावैशिष्ट्यञ्च स्वसमानाधिकरण्यस्वाव च्छेदकविषयतानिष्ठत्वोभयसम्बन्धेनेतिवदन्ति ।

अत्र साध्यव्यापकाभाववत्पक्षस्य बाधत्वे तस्यैव हेतुव्यापकाभा-ववत्पक्षस्य स्वरूपासिद्धत्वे च तयोरव्याप्तिर्दुरुद्धरा तद्विषयताया

जन्यतानवच्छेदकत्वेनोभयाभाववत्वात् एवं साध्यवदवृत्तिमत्पक्षस्य बाधत्वे तत्राप्यव्याप्तिः एवमीदृशस्य स्वरूपासिद्धत्वे तत्रापि चाव्याप्तिर्दुर्वारा स्यादिति तेषामलक्ष्यत्वमभ्युपेत्य सत्प्रतिपक्षविषयताभेदनिवेशवत्तादृशबाधादिविषयताभेदनिवेशनस्था समाहृत्य निर्दोषतोपपादनीया भवतीतिचिन्त्यम् वह्न्यभाववज्जलवत्कालीनत्वेसति जलाभाववह्निमत्कालीनत्वेसति वह्न्यभाववज्जलव्याप्यवत्कालीनत्वे सति जलाभाववद्वह्निव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदे एकरूपेण प्रतिबन्धकत्वानभ्युपगमपक्षे तादृशजन्यताविशिष्टत्वस्य जलवत्तादृशह्रदत्वावच्छिन्नविषयतायां सत्त्वेन विशिष्टद्वयविषयतान्तर्गततयाऽतिव्याप्तेः, जन्यताभिन्नविशिष्टत्वपरिःकारेणापि वारणासम्भवात्तद्विषयताभेदघटितत्रितयाभावनिवेशे जलाभावहेतुकोक्तस्थले तत्राव्याप्त्यापत्तेरिति।

परेतु प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वस्वविशिष्टद्वयविषयताविशेषणमिति वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयतामादाय न दोषसम्भवः यद्वा परस्परस्वावच्छिन्नविषयताशून्यज्ञानीयत्वं यद्रूपावच्छिन्नविषयताविशेषणस्वाच्यम् तथापि न बाधाद्यव्याप्तिः नचाननुगमः निश्चयनिष्ठावच्छेदकतावैशिष्ट्यस्य विषयतायां स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टरूपावच्छिन्नविषयतासामानाधिकरण्योभयसम्बन्धेन वाच्यत्वात् प्रथमवैशिष्ट्यञ्च स्वनिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतासामानाधिकरणाभावीयप्रतियोगितानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन द्वितीयवैशिष्ट्यञ्च स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व स्वसामानाधिकरणाभावीयप्रतियोगितानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेत्याहुः।

तदसत् गगनाभाववद्भाववत्कालीनघटोगगनवानित्यत्राभाववत्तादृशघटे रूपन्नीलरूपवादित्यत्र नीलरूपाभाववन्नीलेऽभावो वह्निमानित्यत्र वह्न्यभाववति वह्निमति वह्न्यभाववज्जलवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदे ह्रदश्शैवालवद्ध्रदकालीनवह्निमाञ्जलादित्यत्र ता·

दृशवह्निव्यापकीभूताभावप्रतियोगिशैवाले चातिव्याप्त्यापत्तेः तत्र विशिष्टद्वयविषयतायाः प्रतिबन्धकतातिरिक्तवृत्तित्वाविरहात् तद्रूपावच्छिन्नविषयताकनिश्चययोः परस्परस्वावच्छिन्नविषयताद्वयशून्यत्वविरहात् नच नीलरूपाभाववन्नीलज्ञानस्य वह्न्यभाववद्वह्निमद्विषयकज्ञानस्य च कथं प्रतिबन्धकत्वविरोध्यविषयकत्वादितिवाच्यं नीलत्वावच्छेदेन नीलरूपाभावावगाहित्वस्य रूपे नीलत्वावगाहित्वस्य च प्रतिबन्धकताप्रयोजकस्य प्रथमज्ञाने वह्न्यवच्छेदेन वह्न्यभावावगाहित्वस्याभावे वह्निमत्त्वावगाहित्वस्य च तथाविधस्य द्वितीयज्ञाने सत्वात् नच यद्रूपावच्छिन्नविषयतायामभाववत्ताहशघटत्वाद्यवच्छिन्नविषयताभेदानिवेशनीया इतिवाच्यम् एतल्लक्षणस्य शब्दैक्यादरपक्षीयतायाः प्रागेव व्यवस्थापितत्वेन ताहशघटपक्षकाभावाभावसाध्यकेऽभाववत्ताहशघटरूपबाधेऽव्याप्त्यापत्तेरिति ॥

अन्येतु यद्रूपवृत्तित्वप्रकृतानुमितित्वव्यापकप्रतिवध्यताविशिष्टप्रतिवध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकताविशिष्टान्यत्वोभयाभाववत्वस्विशिष्टद्वयविषयतायां विवक्षणीयम् प्रतिवध्यतावैशिष्ट्यञ्च स्वावच्छेदकप्रकारतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारत्वावच्छिन्नत्वस्वावच्छेदकविशेष्यतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वोभयसम्बन्धेन अवच्छेदकतावैशिष्ट्यञ्च स्वविशिष्टविशेष्यत्वावच्छिन्नत्वसम्बन्धेन स्ववैशिष्ट्यञ्च स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारताकत्वस्वाश्रयप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन प्रकृतानुमितित्वव्यापकप्रतिवध्यतायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य वा विशिष्टद्वयविषयतायां प्रवेशे गगनाभाववदभाववत्कालीनघटो गगनाभाववानित्यस्य निश्चयविशिष्टनिश्चयत्वेनैव विरोधित्वपक्षे बाधे याऽव्याप्तिर्या च ताहशघटोऽभाववानित्यस्यापि विशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वपक्षेऽतिव्याप्तिस्तयोर्मतद्वयेऽप्यत्र नावकाशः नच धूमवान् ह्रदइतिबुद्धिम्प्रति धूमाभाववान् वह्न्यभाववानितिनिश्चयविशिष्टवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयताशालिनिश्चयस्य प्रतिबन्धकतया तन्निरूपितावच्छेदकविषयतानिष्ठा-

वच्छेदकताविशिष्टत्वस्यैव वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयतायां सत्वेनोक्तोभयाभाववत्तया बाधाद्यव्याप्तिः स्यादिति विशेष्यदलघटकप्रतिबध्यत्वोभयाभावघटकप्रतिबध्यत्वयोर्विशिष्टद्वयाघटितत्वघटकप्रतिबन्धकत्वविशेष्यदलघटकप्रतिबन्धकत्वयोरैक्यं विवक्षणीयास्विवक्षितञ्च तथाचनानुगमइतिवाच्यं प्रकृतानुमितिप्रतिबन्धकताविशिष्टरूपवत्त्वस्य समुदायार्थतया विवक्षितत्वात् वैशिष्ट्यञ्च स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वस्वविशिष्टाधेयतात्वावच्छिन्नप्रतियोगिताविशिष्टत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वनिरूपितप्रतिबध्यताविशिष्टप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकताविशिष्टान्यत्वत्वावच्छिन्नत्वसम्बन्धेन प्रतियोगितावैशिष्ट्यञ्च स्वनिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वाविशिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वनिरूपकभाववत्त्वस्वावच्छेदककोटिप्रविष्टप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परानिश्चयनिष्ठावच्छेदकतावत्त्वोभयसम्बन्धेन अभाववत्ताच स्वावच्छिन्नत्वस्वावच्छिन्नविषयत्वनिष्ठावच्छेदकताकत्वोभयसम्बन्धेन अवच्छेदकतावत्ताच स्वविशिष्टरूपावच्छिन्नत्वनिष्ठावच्छेदकताकत्वस्वनिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टरूपावच्छिन्नविषयत्वनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन स्ववैशिष्ट्यमवच्छेदकतावैशिष्ट्यञ्च स्वसमानाधिकरणाव्यापकविषयताशून्यत्वरूपाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकत्वस्वनिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन बोध्यम् अत्रच साध्यव्यापकाभाववत्पक्षादौ नाव्याप्तिः नवाऽभाववत्तादृशघटादावतिव्याप्तिः ।

अथात्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः तज्ज्ञानीयजलवद्ह्रदत्वावच्छिन्नविषयतायां तादृशप्रतिबन्धकतावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताकपर्याप्त्यनुयोगितावच्छेदकजलत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वात् तादृशप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टान्यत्वस्यैव संसर्गतयोपादाने गगनाभाववदभाववत्कालीनघटो गगनाभाववानिति-

ज्ञानीयविशिष्टविषयतायामपि निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रति-
बन्धकतावच्छेदिकायामभावत्वावच्छिन्नप्रकारतात्वेन गगनाभावत्वा-
वच्छिन्नप्रकारताया अन्यूनानतिरिक्तधर्मावच्छिन्नप्रकारतानिरूपित-
विशेष्यत्वावच्छिन्नत्वेनाऽव्याप्तिरेव स्यात् प्रतिबध्यताविशिष्टप्रतिब-
ध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकविषय-
ताविशिष्टान्यत्वप्रवेशेऽपि तादृशघटो गगनाभाववानितिज्ञानीयप्रकार-
तायास्तज्ज्ञानस्य प्रकृतानुमितिंप्रति निश्चयविशिष्टनिश्चयत्वेनैव
प्रतिबन्धकत्वमितिपक्षे सर्वथैव तादृशप्रतिबन्धकतानवच्छेदकत्वे-
नाऽव्याप्तितादवस्थ्यम् तादृशप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टा-
न्यत्वमेव विषयतायान्तादृशानवच्छेदकत्वम् वैशिष्ट्यञ्च पर्य्याप्ति-
घटितस्वावच्छेदकावच्छिन्नत्वादिसम्बन्धेनेत्युक्तौ घटो गगनवानि-
तिबुद्धिम्प्रति या ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता तदवच्छेदक-
प्रकारताविशिष्टत्वस्यैव सत्त्वेन गगनाभावत्वावच्छिन्नप्रकारताया अ-
संग्रहेऽपि तादृशघटो गगनवानितिज्ञानप्रतिबध्यता अपि प्रतिबध्यता-
विशिष्टत्वेनाभाववान्तादृशघट इत्यस्यापि विशिष्टनिश्चयत्वेनैव प्रति-
बन्धकत्वपक्षे तत्प्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्ध-
कतावच्छेदकाभावत्वावच्छिन्नप्रकारताविशिष्टत्वस्यैवाभावत्वावच्छि-
न्नविषयतायामपि सत्त्वेनातिव्याप्तिरेव स्यादितिचेन्न वह्निव्यापकाभा-
वान्वह्न्यभाववज्जलवद्वृत्तिजलवान्तादृशजलवान्हृद इत्यस्य जलव-
तिवह्न्यभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वग्रहे निश्चयविशिष्टतादृशज-
लत्वावच्छिन्नप्रकारताकनिश्चयत्वेनापि प्रतिबन्धकत्वस्य वाच्यतया
तादृशप्रतिबन्धकतावच्छेदकताविशिष्टत्वस्य विशिष्टजलवद्ध्रदत्वा-
वच्छिन्नविषयतायां सम्भवादतिव्याप्त्यभावात्प्रतिबन्धकतावच्छेद-
कप्रकारताविशिष्टान्यत्वस्याविवक्षणीयत्वात् ।

यदिच जलावच्छेदेन वह्निसामानाधिकरण्ये गृहीते जलवत्तया
गृहीते ह्रदे वह्निमत्त्वपर्य्यवसानेन तत्र वह्निव्यापकाभावस्यापि वह्निवि-
रोधभङ्गात् निश्चयविशिष्टतादृशनिश्चयत्वेन न प्रतिबन्धकत्वमित्यु-
च्यते तदापि तादृशघटोगगनाभाववानभाववानित्यादीनां विशिष्टनि-
श्चयत्वेनैव प्रतिबन्धकत्वपक्षस्यादृतत्वेन तत्पक्षे प्रतिबध्यताविशिष्ट-
प्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकप्र-
कारताविशिष्टान्यत्वस्य पर्य्याप्तिघटितस्वावच्छेदकावच्छिन्नप्रकारतानि-

रूपितत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन स्व-विशिष्टविशेष्यत्वावच्छिन्नत्वसम्बन्धेन विवक्षायां दोषाभावात् तादृश-घटो गगनाभाववान् घटोगगनाभाववानित्यादिज्ञानीयायाः कस्याश्चिदपि प्रकारतायास्तादृशप्रतिबन्धकतावच्छेदकत्वविरहात् घटोऽभाव-वानितिज्ञानीयायाश्च तादृशत्वात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ग्र-दज्ञानीयजलत्वावच्छिन्नप्रकारतामादायैव तत्राप्यतिव्याप्तिवारणात्। किञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वनिवेशपक्षे तादृशघटोगगनाभाववानितिज्ञानमादायाभाववत्तादृशघटेऽतिव्याप्तिवारणाय यद्रूपवृत्तित्वघटितोभयाभावपर्य्यन्तानुधावनम् नच ह्रदोवह्नि-व्यापकाभाववानितिज्ञानस्य ह्रदे वह्निव्यापकाभावोऽव्याप्यवृत्तिरितिज्ञानकाले वह्न्यभाववान्वह्निव्यापकाभाववानितिनिश्चयविशिष्टत्वेन प्रतिबन्धकत्वे वह्निव्यापकाभावत्वावच्छिन्नप्रकारतायास्तादृशप्रतिबन्धकतावच्छेदकत्वेन तत्राव्याप्तिरितिवाच्यं ह्रदेवह्निसामानाधिकरण्यग्रहस्यैव वह्निव्यापकाभावनिश्चयत्वेन प्रतिबन्धकतायामुत्तेजकत्वस्यौचित्येन तत्सत्त्वे निश्चयविशिष्टत्वेनापि प्रतिबन्धकत्वासम्भवात् वह्निव्यापकसामानाधिकरण्यग्रहस्यैवोत्तेजकत्वे च तादृशप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकप्रकारताविशिष्टान्यत्वस्यैव प्रवेशनीयत्वात् समानाकारकज्ञानीयाविषयतयोरैक्येन तत्र दोषासम्भवात्। एतेन गगनाभावत्वावच्छिन्नप्रकारताया अभावत्वावच्छिन्नप्रकारतात्वेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेपि न क्षतिः।

वस्तुतः तादृशघटोगगनाभाववान् तादृशघटोऽभाववानितिनिश्चययोः विशिष्टबुद्धित्वेनैव प्रतिबन्धकत्वन्निश्चयविशिष्टनिश्चयत्वेनैव वा प्रतिबन्धकत्वमितिमतद्वयसाधारण्येनापि शक्यते परिःकर्तुं तथाहि प्रतिबध्यतावैशिष्ट्यघटकस्वावच्छेदकविशेष्यतावच्छेदकावच्छिन्नविशेष्यत्वे एकत्ववृत्तित्वं प्रवेश्यम् तादृशप्रतिबध्यताविशिष्टप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टान्यप्रकारताविशिष्टान्यत्वञ्चोपादेयम् एवंसति गगनाभाववद्भाववत्कालीनघटोगगनवानितिप्रतिबध्यता न भवति प्रतिबध्यताविशिष्टा तदवच्छेदकविशेष्यताया एकत्वावृत्तित्वात् या च कालीनत्वप्रकारतानिरूपितैकत्ववृत्तिः सा नावच्छेदिका

घटो गगनवानितिग्रहप्रतिबध्यतानिरूपिता च घटो गगनाभाववानि-तिनिश्चयनिष्ठाविशिष्टबुद्धित्वावच्छिन्नैव अभाववान् घट इतिनिश्चयनि-ष्ठा ज्ञानवैशिष्ट्यावच्छिन्नैवेति तादृशघटो गगनाभाववानितिज्ञानी-यायामपि प्रकारतायां तादृशप्रकारताविशिष्टत्वेन विशिष्टान्य-प्रकारत्वासम्भवात् तादृशघटोऽभाववानित्यत्र तत्प्रकारतायास्त-त्सम्भवाद्दोषाभावात् पक्षतावच्छेदकसाध्यतावच्छेदकघटकजलाभा-वादिनिष्ठप्रकारतायाः ह्रदो जलाभावकालीनवह्निमान् जलाभावकाली-नह्रदो वह्निमानित्यादिबुद्धिप्रतिबध्यतावच्छेदकत्वन्न सम्भवति तदव-च्छेदककोटौ तत्तन्निष्ठावच्छेदकत्वस्यैव प्रवेशाद्विषयत्वयोरभेदस्यैत-न्मतेऽभावात् तन्मतावलम्बने सम्बन्धघटकप्रकारतायामवच्छेदकता-नात्मकत्वस्य प्रवेश्यत्वात् अवच्छेदकांशज्ञानप्रतिबध्यताचावच्छेद-कमुख्यप्रकारकज्ञानसाधारिणीति तदवच्छेदकतादृशविषयताया अ-प्रसिद्धिविरहात् एवञ्च जलाभावकालीनह्रदोवह्निमानित्यादौ जला-भाववान्ह्रदइतिबुद्धिप्रतिबध्यतायाः प्रतिबध्यताविशिष्टत्वाभावान्न व-ह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेतिव्याप्तिरितिप्राहुः ॥ ० ॥

अथ परस्परस्वावच्छिन्नविषयताशून्यत्वादिनिवेशस्योपेक्षितत्वेऽ-भावो गगनत्ववानाधेयत्वादित्यत्र हेतुमत्पक्षघटितासाधारण्येऽव्या-प्तिः तन्निश्चये तादृशविशिष्टद्वयविषयताशून्यत्वविरहादितिचेन्न वि-शिष्टद्वयविषयतायामसाधारण्यविषयताभिन्नत्वस्यासाधारण्यप्रतिब-न्धकतातिरिक्तवृत्तित्वस्य वा विशेषणतया विवक्षितत्वादुक्तदोषस्या-सम्भवात् अतएव वह्निमाञ्जलादित्यत्र वह्निव्यापकभूताभावप्रति-योगिजलवद्ध्रदे नातिव्याप्तिः अन्यथा वह्निव्यापकीभूताभावप्रतियो-गिजलत्वावच्छिन्नविषयताया असाधारण्यविषयताभिन्नत्वविरहेण तन्निश्चये विशिष्टद्वयविषयताशून्यत्वस्य सत्वात् अथवा विशिष्टान्त-राघटितत्वनिवेशेनैवोक्तविशिष्टातिव्याप्तिवारणसम्भवात् पूर्वनिवेशो-पि साधीयानेव ।

परेतु पक्षेसाध्यवैशिष्ट्यावगाहिहेतुवैशिष्ट्यावगाहिग्रहाविरो-धित्वे सति प्रकृतानुमितिविरोधित्वरूपव्यभिचारसामान्यलक्षणस्य पक्षवृत्तित्वविशेषिते साध्यव्यापकीभूताभावप्रतियोगिप्रकृतेहेतौ स-त्यन्तविरहेण पक्षवृत्तित्वाविशेषितविशेष्यदलविरहेणासत्वमाशङ्क्य सत्यन्तदलघटकप्रतिबन्धकतायामसाधारण्यविषयत्वानवच्छिन्नत्वावि-

वेश्यात्रकेचिदित्यादिना पक्षवृत्तित्वसहितस्य व्यभिचारत्वमुपपादितं तत्र तत्र विशेष्यदलस्यास्तिपरिष्कारः पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वप्रकृतानुमितिप्रतिबन्धकत्वाभाववत्त्वोभयाभाववत्त्वघटिततया विशेष्यदलं परिष्कृत्य पक्षवृत्तित्वाघटितस्य व्यभिचारत्वमुपपादितं परेत्वित्यादिना सव्यभिचारग्रन्थेन तत्र विशेषणदलपरिष्कारः।

अत्र च विशिष्टद्वयाघटितत्वकल्पस्य परेत्वित्यादिग्रन्थावलम्बिता पक्षवृत्तित्वासहिततादृशाविशिष्टस्यासाधारण्यतास्वदता स्वयमेव प्रकटीकृता तत्र च पक्षे विशेषणदलविरहेण हेतुमत्पक्षघटितस्य साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्य व्यभिचारत्वविरहेणासाधारण्यत्वाभाव इवाभावो गगनत्ववानाधेयत्वादित्यत्र गगनत्वव्यापकीभूताभावप्रतियोग्याधेयत्वस्यापि हेतुमत्पक्षघटितस्य विशेषणदलविरहप्रयुक्तव्यभिचारत्वविरहेणासाधारण्यत्वाभावोऽङ्गीकार्य्यः परिष्कृतस्य च विशेषणदलस्य पक्षवृत्तिघटिते सर्वस्मिन्नेवासाधारण्ये सम्भवेन तस्यासाधारण्यघटकत्वाभावोक्तेरुन्मत्तकृततापत्त्याऽपरिष्कृतस्यैव विशेषणदलस्य लक्षणघटकताया अवश्यवक्तव्यत्वात् यथाच ह्रदोवह्निमान्वह्न्यभाववदवृत्तिद्रव्यत्वादित्यत्र साध्याभाववद्वृत्तित्वविशिष्टहेतोर्हेतुतावच्छेदकविशिष्टहेतुग्रहविरोधित्वेन व्यभिचारलक्षणानाक्रान्तत्वेन साधारण्यानात्मकत्वमसिद्धा हेतोर्दुष्टत्वञ्च तत्रोक्तन्तथातादृशाधेयत्वस्य विशेषणदलाविरहेण सामान्यव्यभिचारणलक्षणानाक्रान्तत्वेन साधारण्यानात्मकत्वं साध्यासामानाधिकरण्यविरोधेनैव हेतोर्दुष्टत्वञ्चाभिमतन्तत्राभ्युपेयं तथाच काव्याप्तिशङ्का तत्रेतिवदन्ति।

ननु प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकविषयताशून्यत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चयविशेषणतयोपादेयं तथासति वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदनिश्चये तादृशप्रतिबन्धकतानवच्छेदकाधेयत्वविषयतायाः सत्त्वेन मेयत्वविशिष्टव्यभिचारनिश्चये तथाविधाया मेयत्वविषयताया विद्यमानत्वेन जातिमान्वह्न्यभाववानितिज्ञाने जातित्ववह्न्यभावादिविषयतायास्तादृश्याः सत्त्वेन निरुक्तविषयताशून्यत्वासम्भवात् तन्निश्चयमादाय दोषस्यासम्भवेन विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वाव्यापकविषयताशून्यत्वानान्निवेशो न कार्य्यस्तत्तविशेषणापेक्षया चैतस्यातिलघुत्वात् नच वह्न्यभाववा-

न्ह्रद इत्यादिज्ञानीयनिरवच्छिन्नह्रदत्वप्रकारत्वह्रदादिविशेष्यत्वादीनामप्रकृतानुमितिप्रतिबन्धकतानवच्छेदकत्वेन सर्वत्रासम्भव इति वाच्यं प्रतिबन्धकतानवच्छेदकत्वस्य प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वरूपस्य वाच्यत्वात् वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसम्बन्धेन बोध्यम् ।

नचैवमपि वह्निरवृत्तिरित्यत्र वह्निमत्त्वव्याप्तिस्तज्ज्ञानस्य वह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतया विशेष्यताया आश्रयनिष्ठायाः प्रतिबन्धकतावच्छेदकविषयतानात्मकत्वात्, तदनवच्छिन्नत्वाच्च तादृशविषयताविशिष्टान्यतया तच्छून्यत्वस्य तज्ज्ञाने विरहादिति वाच्यं स्वनिरूपितत्वगर्भान्यतमसम्बन्धेन वैशिष्ट्यस्य वाच्यत्वादिति चेन्न वह्न्यभाववान्ह्रद इति ज्ञानस्यावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकतापक्षे वह्निविषयताया निरुक्तान्यतमसम्बन्धेन तादृशविषयताविशिष्टान्यतया वह्न्यभाववद्ध्रदत्वावच्छिन्ने लक्षणस्यासम्भवात्, यदि तद्वारणाय स्वावच्छेद्यनिरूपितत्वस्याप्यन्यतमकोटौ प्रवेशः क्रियते स्यात्तदा धूमाभाववद्वृत्तिर्वह्निर्द्रव्यमितिज्ञानविषये स्वरूपतोद्रव्यत्वविशिष्टे धूमाभाववद्वृत्तिवह्नावतिव्याप्तिरिति विशिष्टान्तराघटितत्वं निवेश्यमेव एव संसर्गस्य स्वरूपतोभानाभ्युपगमे वह्न्यभाववज्जलवद्विशिष्टजलवद्ध्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वमपि निवेश्यमेव आधेयत्वनिष्ठसांसर्गिकविषयतायाः प्रतिबन्धकतावच्छेदकजलादिप्रकारत्वाद्यवच्छेद्यनिरूपितत्वेन विशिष्टान्यत्वविरहात् ।

अस्तुवा धेयत्वसंसर्गस्याधेयतात्वेन भानं तथापि वह्निसंसर्गतया भासमानस्वनिष्ठप्रतियोगित्वविषताया, वह्नित्वसंसर्गतयाभासमानावच्छिन्नप्रतियोगित्वविषयतयोरवच्छेद्यावच्छेदकभावविरहे वह्निसंसर्गनिष्ठविषयता, तन्निरूपितप्रतियोगितात्वादिविषयतावारणाय, स्वावच्छेद्यनिरूपितनिरूपितत्वस्यापि वैशिष्ट्यघटकतायावाच्यतया, प्रकृते नाधेयतात्वविषयतायामपि निरुक्तविशिष्टान्यत्वसम्भवः यदिचोक्तसांसर्गिकविषयत्वयोरवच्छेद्यावच्छेदकभावोऽङ्गीक्रियते तदापि धर्मिपारतन्त्र्येण ह्रदत्वादौ वह्न्यभावादेर्वह्न्यभाववान्ह्रद इति

ज्ञानमात्रे भासमानतया सामानाधिकरण्यत्वादिविषयतावारणार्थं स्वावच्छेद्यनिरूपितनिरूपितत्वादीनामप्रवेशश्चावश्यक एव ।

किञ्च वह्न्यभाववज्जलवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदेऽतिव्याप्तेर्वारणं विशिष्टद्वयाघटितत्वनिवेशनस्विनादुश्शक्यमेव कालीनत्वादिविषयताया अपि प्रतिबन्धकतावच्छेदकत्वात् स्वावच्छेद्यनिरूपितनिरूपितत्वादीनां वैशिष्ट्याघटकत्वेऽप्येतद्दोषस्य सम्भवात् ।

केचित्तु गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटेऽव्याप्तिः गगनविषयतागगनत्वविषयतयास्तादृशप्रतिबन्धकतानवच्छेदकत्वात् बाधज्ञानस्याभावत्वावच्छिन्नप्रकारतानिरूपिततादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वादतः स्वावच्छेद्यनिरूपिनिरूपितत्वादीनां संसर्गत्वेनोपादानस्यावश्यकतया विशिष्टद्वयाघटितत्वनिवेशआवश्यकः ॥ यत्तु प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयताविशिष्टान्यत्वमेव वाच्यं नतु प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वं तत्र च स्वावच्छेद्यनिरूपितनिरूपितत्वादीनामप्रवेशो वैशिष्ट्यघटकतया नावश्यकः नच तादृशजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र ह्रदो वह्निमान्वह्न्यभाववज्जलवद्वृत्तिजलाभावव्याप्यादित्यत्र च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिर्दुर्वारा तज्ज्ञानस्य प्रकृतानुमितिप्रतिबध्यत्वादिति वाच्यम् प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टप्रतिबध्यतावच्छेदकाविषयताविशिष्टान्यत्वस्य तादृशप्रतिबध्यताविशिष्टजन्यतावच्छेदकविषयताविशिष्टान्यत्वस्य वा विवक्षितत्वादुक्तातिव्याप्तिवारणसम्भवात् ॥ एतेन सर्वंगगनवदित्यत्र गगनाभाववज्जलवदादिरूपबाधेऽव्याप्तिः तज्ज्ञाने गगनत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रकृतानुमितिनिरूपितप्रतिबन्धकत्वप्रतिबध्यत्वयोः सत्वेन जलविषयता तन्निरूपितसमवायविषयता तन्निरूपितसमवायत्वविषयत्वानां प्रतिबध्यतावच्छेदकविषयताविशिष्टान्यत्ववारणाय स्वावच्छेद्यनिरूपितनिरूपितत्वादीनां वैशिष्ट्यघटकतया प्रवेशस्यावश्यकत्वमेवेति निरस्तं जलत्वादिविषयतानामपि जन्यतावच्छेदकत्वेन तद्वैशिष्ट्यघटकतयोक्तसम्बन्धप्रवेशे प्रयोजनाभावादिति तत्तुच्छम् सत्प्रतिपक्षासाधारण्योर्हेत्वभावादिव्याप्यवत्पक्षा

दिरूपस्वरूपासिद्ध्यादौ साध्यव्यापकाभाववत्पक्षादिरूपबाधादाव- व्याप्तेर्दुरुद्धरत्वादिति वदन्ति ॥

अथ प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रातिबन्धक- त्वाव्यापकप्रतिबन्धकताशून्यज्ञानविषयतावच्छेदकत्वं यद्रूपे उक्तप्र- तिबन्धकताशून्यत्वं तादृशनिश्चये वा विशेषणन्देयं तथासति वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवद्ध्र- दत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताव्यापक- स्य तादृशजलत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयता- शालिनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वस्य वह्न्यभाववज्जलवद्वृ- त्तिजलवद्ध्रदनिश्चये सत्त्वेन निरुक्तविशिष्टेऽतिव्याप्तिविरहात् विशिष्टद्वयाघटितत्वन्ननिवेश्यम् एवं व्यभिचारप्रतिबन्धकत्वा- व्यापिकाया मेयत्वप्रकारतानिरूपितव्यभिचारत्वावच्छिन्नप्रतिबन्ध- कतायां मेयत्वविशिष्टव्यभिचारनिश्चये विरहेण तत्राप्यतिप्रसक्तेरभा- वात् । विशिष्टान्तराघटितत्वमपि न प्रवेश्यं निरुक्तप्रतिबन्धकताशून्यत्व- स्य यद्रूपावच्छिन्नविषयताशालिनिश्चयाविशेषणत्वेपि ह्रदो जात्यभावा- नित्यत्र जातिमाञ्जातिमानित्यस्य तादृशप्रतिबन्धकताशून्यत्वेनाव्याप कविषयताशून्यत्वन्निवेश्यमेव न च बाधादिषु लक्षणासम्भवस्तन्निश्चय- प्रतिबन्धकताया निरुक्ताव्यापकत्वस्य सत्त्वादनुमितिप्रतिबन्धकतायाः स्वरूपासिद्ध्यादिनिश्चयविपरीतबाधनिश्चये सत्त्वेन तत्र बाधप्रतिबन्ध- कताविरहादितिवाच्यं तादृशयत्किञ्चित्प्रतिबन्धकत्वाव्यापकप्रतिबन्ध- कताशून्यत्वस्य विशेष्यदलघटकप्रतिबन्धकत्वविशेषणदलघटकप्रतिब- न्धकत्वयोरैक्यस्य वा विवक्षितत्वात् नचैवमपि सर्वं गगनवद्वाच्यत्वा- दित्यत्र बाधेऽव्याप्तिः सर्वेषामेव बाधनिश्चयानामेकरूपेणैव तत्र प्रति- बन्धकतया तदव्यापकस्य घटत्वादिधर्मविशेषावच्छिन्नविशेष्यता- निरूपितगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रति- बन्धकत्वस्यैव तत्र सत्त्वादिति वाच्यम् अव्यापकत्वघटकप्रति- बन्धकताधिकरणीभूतनिश्चये स्वावच्छिन्नविषयत्वाव्यापकविषयताशू- न्यत्वस्यविशेषणत्वाच्चं तथासति बाधान्तरनिश्चयस्य तादृशप्रतिब- न्धकत्वाधिकरणतथाविधनिश्चयत्वाविरहेण दोषासम्भवात् ।

यद्विचाप्रामाण्यज्ञानोत्तेजकत्वानुरोधेनाव्याप्यवृत्तित्वज्ञानोत्तेजकत्वा- नुरोधेन च प्रतिबन्धकतायास्तत्रभेद एवाङ्गीकार्यमित्युच्यते तदा

प्रतिबन्धकत्वाधिकरणे व्यापकविषयताशून्यत्वन्ननिवेश्यम् नचासा· धारण्येऽव्याप्तिः असारण्यप्रतिबन्धकत्वाधिकरणीभूते हेतुमत्पक्ष· निश्चये हेतुविशेष्यकप्रतियोगित्वाभावादिप्रकारकबुद्धिनिरूपितप्रति बन्धकत्वस्य विरहेणाव्यापकस्य साधारण्यनिश्चये सत्वादित्यव्याप· कविषयताशून्यत्वं निवेदश्यमेवेतिवाच्यं हेतुमत्पक्षनिश्चयविशिष्टासा· धारण्यनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसम्भवात् । एतेन हेतुमत्पक्षघटितासाधारण्याविषयत्वाव्यापकाविषयताशून्यत्व· स्यासाधारण्यप्रतिबन्धकताश्रयत्वस्य च हेतुमत्पक्षनिश्चये सत्वाद· व्याप्तितादवस्थ्यमिति निरस्तम् तत्र केवलहेतुमत्पक्षनिश्चयऽसाधा· रण्यप्रतिबन्धकताविरहाच्च नच गगनाभाववदभावत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः अभाववान्तादृशघटइतिनिश्चयस्या· पि बाधप्रतिबन्धकत्वाधिकरणतया तत्र बाधनिश्चयवृत्तेस्तादृशघटे गगनाभावोऽवृत्तिरितिबुद्धिनिरूपितप्रतिबन्धकत्वस्यासत्वादिति वाच्यम् । अव्यापकीभूतप्रतिबन्धकतायाः प्रकृतानुमितित्वव्यापक· प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकाविषयत्वानवच्छिन्नत्वस्य विशेषणत्वात् नच तादृशजलाभाववद्वह्निमत्कालीनहृदो वह्निमानि त्यत्र तादृशजलवत्तादृशहृदेऽतिव्याप्तिः ।

यत्तु व्यभिचारविशिष्टमेयत्वे चातिव्याप्तिः तन्निश्चयस्य प्रकृतानु· मितिप्रतिबध्यतया तन्निष्ठाव्यापकप्रतिबन्धकतायाः प्रतिबध्यतावच्छेद· कविषयित्वावच्छेद्यतया धारणासम्भवादिति तत्तुच्छम् प्रतिबध्यता· नवच्छेदकविषयताशून्यज्ञानीयविषयत्वानवच्छिन्नत्वविवक्षयापि वा· रणसम्भवादिति वाच्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्ट· प्रतिबध्यतावच्छेदकत्वस्य तादृशप्रतिबध्यताविशिष्टजन्यतावच्छेद· कत्वस्य वा विवक्षितत्वात् । गगनाभावधर्मिकतादृशघटावृत्तित्वबु द्धिम्प्रति तादृशघटधर्मिकाभावबुद्धेरपि प्रतिबन्धकत्वस्यानुभविक तया तत्रोक्तरीत्या दोषासम्भवेनोक्तरीत्या निवेशस्यैव चाऽनावश्यक· त्वादिति चेत् ।

उच्यते वह्न्यभाववज्जलवत्कालीनहृदो वह्निमानित्यत्र जलवत्ता· दृशहृदेऽतिव्याप्तिः तज्ज्ञानस्य तादृशहृदत्वावच्छिन्नविशेष्यतानिरू· पितजलत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनैव प्रतिबन्धकतया तद· व्यापकत्वस्य तज्ज्ञाननिष्ठे प्रतिबन्धकत्वेऽसम्भवात् परस्परस्याव·

च्छिन्नविषयताशून्यत्वस्य विशिष्टद्वयाघटितत्वघटकताया निराकृतत्वेन तत्रोक्तस्थलेऽतिव्याप्त्यसम्भवात्, पर्वतत्वावच्छेदेन वह्न्यभावस्यसाध्यतायां वह्निमद्वह्निमत्पर्वतेऽतिव्याप्तिः तज्ज्ञाने बाधप्रतिबन्धकत्वाव्यापकप्रतिबन्धकताशून्यत्वस्य सत्त्वादिति विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वोभयन्निवेश्यमेवेति ॥

यत्तु परस्परस्वावच्छिन्नविषयताशून्यत्वस्य निश्चयद्वयविशेषणताया विशिष्टद्वयाघटितत्वनिवेशे आवश्यकतया तत्परित्यज्य लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपावच्छिन्नविषयताशून्यत्वन्निश्चयाविशेषणतयोपादेयं तथासत्येव मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणसम्भवात् विशिष्टान्तराघटितत्वन्नोपादेयम्। तथाहि व्यभिचारत्वावच्छिन्नविषयकनिश्चयस्य तद्घटकप्रत्येकपदार्थविषयकनिश्चयविशिष्टस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयतान्यत्वस्य व्यभिचारप्रतिबन्धकतावत्त्वेन यद्रूपपदेन व्यभिचारत्वतद्घटकवह्नित्वाद्योर्धारणसम्भवात्। तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारज्ञानेऽसत्त्वादिति तन्मन्दं परस्परस्वावच्छिन्नविषयताशून्यत्वस्य विशिष्टयाघटितत्वघटकताया एवाभावेन तत्स्थानीयत्वोक्तेरसम्भवात् नच मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणायैव तन्निवेश्यमितिवाच्यम् वह्न्यभाववज्जलवत्कालीनह्रदो वह्निमानित्यत्र जलवद्वह्न्यभाववज्जलवत्कालीन ह्रदेऽतिव्याप्तेर्दुर्वारत्वादेतत्पूर्वपक्षतन्निरासाय स्थलविशेषप्रकल्पनक्लेशस्त्वन्याय्य एव परेषाम्बोध्य इति ॥ ० ॥

ननु यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां स्वरूपस्वनिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन वाच्यं तथा ऽति वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चये प्रतिबन्धकतायाः स्वावच्छेदकत्वसम्बन्धेन सत्त्वेन तत्सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन प्रतिबन्धकताया विरहादतिव्याप्त्यसम्भवात् विशिष्टद्वयाघटितत्वन्न निवेश्यं नचासाधारण्येऽव्याप्तिः हेतुमत्पक्षविषयकनिश्चयविशिष्टासारण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसम्भवात्तस्यावच्छेदकतासम्बन्धेनासाधारण्यनिश्चये विरहात् नच सहचारे मथुरानाथेन बाधादि-

निश्चयविशिष्टात्मत्वस्यैव प्रतिबन्धकत्वस्योक्तत्वेन तदवच्छेदकस्य बाधनिश्चये सत्वादसम्भवः स्वनिरूपितावच्छेदकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वस्य संसर्गत्वे बाधादावव्याप्तिवारणेपि निश्चयस्य प्रतिबन्धकतापक्षे वह्न्यभाववज्जलवद्वृत्ति जलवद्ध्रदेऽतिव्याप्तिः एवं साक्षात्प्रतिबन्धकतावच्छेदकतादेरव्याप्यवृत्तित्वे निश्चयविशिष्टनिश्चयीयविषयितात्वेन प्रतिबन्धकत्वस्याभ्युपगततया तत्पक्षेपि चातिव्याप्तिरिति वाच्यं स्वतादात्म्यापन्ननिश्चयवृत्तिनिरूपितावच्छेदकत्वस्वतादात्म्यापन्ननिश्चयावृत्तिनिरूपितावच्छेदकतानिरूपितावच्छेदकत्वस्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकत्वान्यतमसम्बन्धेन भेदप्रतियोगितावच्छेदकत्वस्य संसर्गघटकस्य वाच्यत्वात् स्वरूपस्थानेपि सर्वमतसङ्ग्रहाय स्वरूपस्वावच्छेदकान्यतरत्वसम्बन्धो निवेश्यः वस्तुतः सामग्र्येणाप्येतद्ग्रन्थपर्यालोचने निश्चयप्रतिबन्धकत्वपक्षातिरिक्तपक्षस्यानुन्मेषाद्यथाश्रुतमेव साधु ॥ नच गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः तत्र बाधनिश्चयस्य निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वेन स्वावच्छेदकत्वसम्बन्धेन प्रतिबन्धकतायास्तत्रसत्वादिति वाच्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टविषयताशून्यज्ञानवृत्तित्वेन संसर्गघटकावच्छेदकत्वस्य विशेषणीयत्वात् वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकत्वस्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन एतत्परिष्कारस्तु प्रागेवोक्तः नच हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिरिति वाच्यम् असाधारण्यनिश्चयावृत्तित्वस्याप्यवच्छेदकताविशेषणत्वादिति चेन्न वह्न्यभाववज्जलवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदे नीलरूपाभाववन्नीलेऽभाववत्तादृशघटे चातिव्याप्तेर्दुरुद्धरत्वात् । तन्निश्चयानान्निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वं मानाभावेनावच्छेदकत्वादिसम्बन्धेन प्रकृतानुमितिप्रतिबन्धकतायास्तत्रासत्वादिति दिक् ॥ ० ॥

तादृशविशिष्टद्वयाघटितत्वस्येति । तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयत्वस्येत्यर्थः ननु तादृशविषयताद्वयशून्यप्रतीतिविषयत्वस्येति तथासति वह्न्यभावव्याप्तिह्रदवृत्तित्ववज्जलेऽतिव्याप्तिः स्यान्निरुक्तविशिष्टाविषयकत्वस्य जलांशे ह्रदवृत्ति-

त्ववह्न्यभावयोरेकत्रद्वयंरीत्याऽवगाहमाने ज्ञाने सत्त्वेन तस्यानुमिति-प्रतिबन्धकत्वात् नचोक्तविशिष्टज्ञानस्य सत्प्रतिपक्षत्वमेवेतिवाच्यं विरोध्युन्नायकपरामर्शविषयस्यैव तत्त्वात् विशिष्टस्य ज्ञानेषु व्याप्ति-विशिष्टे पक्षधर्मत्वावगाहिना पक्षे वा व्याप्तिविशिष्टहेतुमत्त्वावगाहिन एव परामर्शत्वस्य सिद्धान्तसिद्धत्वात् व्याप्तिविशिष्टहेतुतावच्छेदका-वच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताकनिश्चय-त्वस्य कारणतावच्छेदकस्यैकत्रद्वयंरीतिज्ञाने विरहात् तज्ज्ञानीयवि-शिष्टविषयताया द्वित्वविरहेण विषयताद्वयशून्यत्वस्य तत्र सत्त्वेपि ता-दृशविषयताविशिष्टविषयताशून्यत्वस्यासत्त्वेन तद्विवक्षायाश्च दोषः य-दिचापेक्षाबुद्धिविषयतावच्छेदकभेदात्तत्तद्धर्मविशिष्टे द्वित्वोत्पत्तिः स्वी-क्रियेत तदोभयाभावनिवेशेपि नदोषइतिश्रेयम् ॥

सत्प्रतिपक्षघटकतादृशविशिष्टद्वयविषयताभिन्नेति प्रतिहेतुव्यापकताविशिष्ट-साध्याभावत्वावच्छिन्नविषयताभिन्नत्वस्य प्रतिहेतुमत्पक्षविषयताभि-न्नत्वस्य च प्रवेशो वह्न्यभावोवह्निमाञ्जलादित्यत्र वह्न्यभाववज्जलव्या-पकतावद्वृत्तिजलव्यापकतावद्वह्न्यभावे ह्रदोवह्निमाञ्जलादित्यत्र व-ह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे चातिव्याप्त्यापत्तिः जलव्यापक-ताविशिष्टसाध्याभावत्वावच्छिन्नविषयताया जलवद्ध्रदत्वावच्छिन्न-विषयतायाश्चोक्तविषयताभेदद्वयानाश्रयत्वात् जलव्यापकवह्न्यभाव कालीनजलवद्ध्रदेपि चातिव्याप्तिः स्यादिति सत्प्रतिपक्षघटकेति ।

यद्यपि सत्प्रतिपक्षविषयिताव्यापकविषयिताकत्वरूपं सत्प्रति-पक्षघटकत्वं विशिष्टवस्तुविशेषणमेव शब्दतः प्रतीयते तथापि तत्रो-क्तातिव्याप्तिवारणस्याशक्यतया न तद्विवक्षणीयमपितु सत्प्रतिपक्षघट-कविषयतात्मकत्वम्भिविशिष्टविषयताविशेषणमेव वाच्यं ।

अथ किं तत् नतावद्विरोध्यनुमितिजनकतावच्छेदकत्वं तथासति भेदप्रतियोगिविषयतायास्तत्तैवरूपेण निवेश्यतया यत्र सत्प्रतिपक्षाप्र-सिद्धिरित्यादिग्रन्थानुत्थानप्रसङ्गात् तत्रापि भ्रमात्मकविरोधिपरामर्शी-यविषयत्वस्यैव जनकतावच्छेदकत्वसम्भवात् नापि सत्प्रतिपक्षविषय-त्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं सत्प्रतिपक्षज्ञानीयखण्डविष-यताया अपि तादृशत्वासम्भवात् निरूप्यनिरूपकभावापन्नविषयत्वा-वच्छिन्नभेदप्रतियोगितावच्छेदकत्वविवक्षणे यत्रेत्यादिग्रन्थानुत्थि-तिप्रसङ्गात् प्रतिहेतुमत्पक्षविषयकत्वप्रतिहेतुव्यापकसाध्याभावविष-

यत्वयोः विशिष्टविषयत्वरूपयोरुक्तभेदप्रतियोगितानवच्छेदकत्वेन सत्प्रतिपक्षाव्याप्तेश्च ।

यत्तु प्रतिहेतुव्यापकसाध्याभावत्वावच्छिन्नविषयतानिरूपित सामानाधिकरण्यविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेव तत् तथासति हेतुव्यापकसाध्याभावत्वावच्छिन्नविषयताया निरुक्तभेदप्रतियोगितावच्छेदकविषयताभिन्नत्वविरहेण सत्प्रतिपक्षाव्याप्तिविरहात् तदसत् उक्तभेदप्रतियोगितावच्छेदकत्वस्य हेतुमत्पक्षविषयतायाश्चिविरहेण सत्प्रतिपक्षघटकताहशविशिष्टद्वयविषयतेति लेखविरोधात् विधेयान्वयस्योद्देश्यतावच्छेदकावच्छेद्यत्वनियमेन यत्रेत्यादिग्रन्थसन्दर्भस्यासाधुत्वप्रसङ्गाच्च पर्वतोवह्निमाञ्जलादित्यत्रापि हेतुमत्पक्षाप्रसिद्ध्या सत्प्रतिपक्षाप्रसिद्धेस्तत्स्थलस्यापि यदर्थत्वेनोद्देश्यतया व्याप्तेस्तत्रासम्भवाद्धेतुव्यापकसाध्याभावस्य प्रसिद्धत्वाद्धेतुमत्पक्षाविषयत्वस्य लक्षणानिविष्टत्वात् विधेयस्योद्देश्यतावच्छेदकावच्छेद्यत्वबाधात् नच सत्प्रतिपक्षविषयिताव्यापकत्वमेव विषयितायान्तत् असम्भवात् सत्प्रतिपक्षविषयितायास्तत्तद्विषयिताव्यभिचारित्वात् यद्रूपावच्छिन्नविषयता सत्प्रतिपक्षविषयताव्यापिका तद्रूपावच्छिन्नत्वन्तु दर्शितातिप्रसङ्गभयेनैव परित्याज्यमिति चेदुच्यते ।

सत्प्रतिपक्षविषयताशून्यज्ञानावृत्तित्वमेव तत् सत्प्रतिपक्षकालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदज्ञानीयविषयताया निरुक्तज्ञानावृत्तित्वेपि तज्ज्ञानस्य यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वविरहात् तमादाय वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेतिप्रसङ्गाभावात् विशिष्टद्वयविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य यद्रूपविशेषणत्वे तु यादृशसमुदायत्वे तादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वमेव विवक्षणीयमिति नोक्तातिव्याप्तिः उक्तकालीनत्वविशेषितोक्तविशिष्टेऽतिप्रसङ्गश्च विशिष्टान्तराघटितत्वेन वारणीयः यद्वा प्रतिहेतुव्यापकसाध्याभावत्वावच्छिन्नविषयताविशिष्टप्रतिहेतुमत्पक्षतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेव विवक्षणीयं वैशिष्ट्यञ्च स्वनिरूपितसामानाधिकरण्यविषयतानिरूपितहेतुविषयतानिरूपितविषयत्वावच्छिन्नत्वसम्बन्धेन तथाच नोक्तग्रन्थासङ्गतिः नवा दर्शिता-

तिव्याप्तिश्च प्रतिहेतोरनेकत्वात् । यद्यपि तादृशविषयताभेदकूट एव प्रवेशनीयस्तथापीदानीन्तदभिसन्धानन्नास्ति कथमन्यथाग्रे निरूप्यनिरूपकभावापन्नविषयताभेदकूटमपेक्ष्य लघुभूतोजनकतावच्छेदकविषयताभेदउपेक्ष्येत कूटानिवेशे च तदेव गुर्विति तदुपेक्षा घटेत तन्नैवाग्रिमग्रन्थतात्पर्य्ये भेदकूटनिवेशोनुसन्धेय एवात्र सन्दर्भस्य परिशुद्धत्वादिति ॥

भ्रमात्मकज्ञानीयविषयतासाधारणेति । अत्र साध्याभावानुमितिजनकतावच्छेदकविषयतात्वेन किञ्चिन्निष्ठविषयतानिरूपिताधिकरणविषयतानिरूपिताधेयत्वविषयतेत्यादिक्रमेण सामानाधिकरण्यविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकविषयताविशिष्टान्यत्वेन वा निवेशनीया विशिष्टद्वयविषयतेति न दोषो नवा कूटादिनिवेशेन गौरवं वैशिष्टयञ्च स्वावच्छिन्नत्वस्वतादात्म्यान्यतरसम्बन्धेन बोध्यम् ।

ननु करीत्योक्तसत्प्रतिपक्षे लक्षणस्योपपादनेपि विशिष्टान्तराघटितत्वस्य तत्रासम्भवादलक्ष्यतैव वाच्या तथाचोक्तप्रयासो निःफलः स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकप्रतिहेतुव्यापकसाध्याभावाधिकरणनिरूपितवत्प्रतिहेतुमत्पक्षत्वात्मकतादृशरूपावच्छिन्नविषयकत्वस्यैव सत्प्रतिपक्षज्ञाने सत्वेन हि न विशिष्टान्तराघटितत्वसम्भवइति चेन्न विशिष्टान्तरविषयतायां सत्प्रतिपक्षविषयत्वाव्यापकविषयताशून्यज्ञानीयसत्प्रतिपक्षविषयताभिन्नत्वस्य विवक्षितत्वात् । केवलसत्प्रतिपक्षविषयकज्ञानीयविशिष्टान्तरविषयतायामुक्तसत्प्रतिपक्षविषयताभिन्नत्वविरहान्न सत्प्रतिपक्षे लक्षणासम्भवः मेयत्वविशिष्टसत्प्रतिपक्षज्ञाने च विशिष्टान्तरविषयता तादृशसत्प्रतिपक्षविषयताभिन्नैवेति नातिप्रसङ्गइतिध्येयम् ।

साध्याभाववद्वृत्तिमत्पक्षात्मकविशिष्टस्यैवेति हेतुतावच्छेदकाप्रवेशेन सत्प्रतिपक्षस्यैकरूपतया लाघवादितिशेषः व्यापकसामानाधिकरण्येत्यादि अथ विरोध्यनुमितिजनकान्वयव्याप्तिवैशिष्ट्यपक्षधर्मत्वोभयावगाहिज्ञानविषयस्यैव सत्प्रतिपक्षतास्वीकारेण विरोधस्यानुमित्यप्रतिबन्धकतापक्षे सामानाधिकरण्यघटितस्यैव व्याप्तित्वात् । तद्घटितव्याप्तिविशिष्टहेतुमत्पक्षस्यैव तत्वेन सत्प्रतिपक्षता न कालीनत्वादिघटितस्य न च विरोधस्यानुमितिप्रतिबन्धकतापक्षे लाघवेन हेतुव्यापकसाध्य-

कालीनत्वस्यैव व्याप्तितया तद्घटितस्यापि सत्प्रतिपक्षत्वं दुर्वारमिति वाच्यं मतभेदेनोभयोस्तथात्वे इष्टापत्तेरिति चेन्न विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकत्वस्य सत्प्रतिपक्षज्ञाने दीधितिकृता निराकरणीत्वेन विरोधिविषयकनिश्चयत्वेनैव हि तद्वाच्यं विरोधित्वञ्च तत्तदभावयोरिव तत्तदभावव्याप्ययोरप्यनुभवसिद्धं तत्र व्यापकसामानाधिकरण्यरूपव्याप्तिघटितविशिष्टज्ञानस्य प्रतिबन्धकतायाञ्च सामानाधिकरण्यादिविषयकत्वं तन्त्रं तदविषयकज्ञानस्यापि साध्याभावांशे हेतुव्यापकत्वावगाहित्ववतो हेतुमत्पक्षविषयत्वावगाहिज्ञानकालीनस्य प्रतिबन्धकत्वात् यद्विषयकत्वस्य हि प्रतिबन्धकताप्रयोजकत्वं तद्घटितविशिष्टस्यैव दोषत्वं नचातथाभूतविषयघटितस्य मेयत्वविशिष्टव्यभिचारादिवत् भवति चातथाभूतविषयघटितो हेतुव्यापकसाध्याभावसमानाधिकरणहेतुमत्पक्षे इतिस न दोषः अतथाभूतवस्तुघटितस्यापि प्रतिबन्धकतोपयोगिविषयमध्यीकृतातथाभूतविषयकघटितत्वमात्रेण सत्प्रतिपक्षत्वञ्चेत्स्वीकरणीयमतथाभूतकालीनत्वाद्यनन्तपदार्थघटितविशिष्टस्य सत्प्रतिपक्षत्वञ्चिमिति न स्वीकरणीयमित्यसार्वज्ञदुर्ज्ञेयसत्प्रतिपक्षप्रसङ्ग इत्याशयः।

सम्पादनीयत्वादिति प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्य यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वन्तद्रूपावच्छिन्नत्वस्यैव सामान्यलक्षणत्वमभ्युपेत्य सम्पादनीयत्वादित्यर्थ इति।

अनुमितिप्रतिबन्धकतायांयद्रूपावच्छिन्नविषकत्वमवच्छेदकन्तद्रूपावच्छिन्नेत्यर्थ इति।

अथ प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकावच्छिन्नत्वमेव लाघवाद्वक्तुमुचितं तथासत्येव दोषैकदेशवारणसम्भवेन तद्वारकानतिरिक्तवृत्तित्वरूपावच्छेदकताघटितनिरुक्तविवक्षादरो व्यर्थ इति चेन्न मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः सत्प्रतिपक्षनिश्चयस्य कार्य्यसहभावेनानुमिताविरोधिताया यद्विचेत्यादिना सत्प्रतिपक्षग्रन्थे दीधितिकृतोक्तत्वेन सत्प्रतिपक्षविषयकप्रकृतानुमितेः सम्भवेन सत्प्रतिपक्षत्वस्य प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वाविरहात् अभावाधिकरणनिरूपितवृत्तित्वाभावव्याप्यवद्वह्निकालीनपर्वतो धूमवान्वह्नेरित्यत्र व्यभिचारेऽव्याप्तेश्च प्रकृतानुमितेरभावाधिकरणवृत्तित्ववद्वह्नित्वावच्छिन्नविषयत्वस्यासम्भवेन तादृशावहित्वे प्रकृतानु-

मित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य सम्भवात् ।

यत्तु सर्वत्रासम्भवापत्तिः ह्रदो वह्निमान्वह्निव्याप्यधूमवान् जातिमान्वह्न्यभाववांश्चेत्यादि समूहालम्बनानुमितेः सम्भवेन प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वादावसम्भवात् । अव्यापकविषयताशून्यत्वस्य प्रकृतानुमितिविशेषणत्वस्य तादृशानुमित्यप्रसिद्ध्या वक्तुमशक्यत्वादिति तदसत् स्वावच्छिन्नविषयत्वाव्यापकस्वावच्छिन्नयद्रूपावच्छिन्नविषयताशून्यत्वस्य विवक्षितत्वात् अनुमितीयपक्षतावच्छेदकावच्छिन्नविषयत्वादेः स्वावच्छिन्नत्वविरहेण जातित्वादिना ह्रदत्वाद्यनवगाहिप्रकृतानुमितेर्निरुक्ताव्यापकविषयताशून्यत्वसम्भवादसम्भवाभावात् । नचाभावत्वेन ह्रदत्वावगाहिन्या ह्रदो वह्निमान् वह्निव्याप्यधूमवानभाववान्वह्निव्याप्यधूमश्चेति समूहालम्बनात्मिकाया अनुमितेरव्यापकाविषयताशून्यतया तत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः सत्त्वेनासम्भवतादवस्थ्यमितिवाच्यं स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यभ्रमभिन्नज्ञानीयप्रकृतानुमितिवृत्तिविषयताभिन्नत्वस्याग्रुस्यन्तेन विवक्षणात् समानाकारकज्ञानीयविषयतयोरैक्येन तथाविधदोषैकदेशमात्रविषयकज्ञानीयविषयताया एव प्रकृतानुमितिवृत्तित्वसम्भवेन दोषविषयतायास्तद्भिन्नत्वादिति ।

ननु प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्त्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयावृत्तिविषयितानिरूपकतावच्छेदकत्वमेव निवेश्यं तावतैव प्रागुदोषाणान्न प्रसक्तिरितिचेन्न ह्रदो वह्निमान्वह्न्यभाववदभाववत्कालीनधूमादित्यत्र वह्न्यभाववद्ध्रदेऽतिव्याप्त्यापत्तेः विशिष्टान्तरतावच्छेदकाभाववद्ध्रदत्वस्य तादृशत्वसम्भवात् अभाववान्ह्रदइतिनिश्चयोत्तरं प्रकृतानुमित्युत्पत्त्यसम्भवात् ।

अथ प्रतिबन्धकत्वघटितनिरुक्त्यादरेपि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटेऽव्याप्तिः अभाववत्तादृशघटत्वस्य विशिष्टान्तरतावच्छेदकस्य तादृशरूपत्वसम्भवात् ।

यद्यपि विशिष्टद्वयविषयिताशून्यस्वावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वमेव प्रतिबन्धकताया तादृशपदार्थघटकतया वाच्यं तथाचाभाववत्तादृशघटत्वस्य न तादृशरूपत्वसम्भवः नचैवं मेयत्वविशिष्टगगनाभाववत्तादृशघटेऽतिव्याप्तिः गगनाभाववत्तादृशघटत्वस्यापि तादृशत्वा·

सम्भवादितिवाच्यं विशिष्टद्वयविषयतायां प्राक्परिष्कृतस्य प्रकृता-
नुमितित्वव्यापकप्रतिबध्यताविशिष्टान्यत्वस्य विशेषणत्वाद्भाववा-
न्तादृशघटइतिज्ञानीयविशिष्टद्वयविषयतायाः प्रकृतानुमितिप्रतिबन्ध-
कतानिरूपितप्रतिबध्यतानवच्छेदकत्वेन तादृशविशिष्टान्यत्वादभाव-
वान्तादृशघटइतिज्ञानस्य तादृशविशिष्टद्वयविषयताशून्यत्वविरहात्
गगनाभाववान्तादृशघटइतिज्ञानविषयत्वस्य तादृशप्रतिबध्यतावच्छे
दकत्वेन तादृशविशिष्टान्यत्वविरहात् तज्ज्ञाने तादृशविशिष्टद्वयविषय-
ताशून्यत्वस्य सम्भवाच्चाव्याप्त्यतिव्याप्त्योरसम्भवात् । नच
गगनत्वेन घटाद्यवगाहिगगनाभाववान्तादृशघटइतिज्ञानस्याभावव
त्तादृशघटत्वावच्छिन्नविषयतावत्त्वात् तादृशविषयत्वाव्यापकविष-
यताशून्यत्वात् तादृशविशिष्टद्वयाविषताशून्यत्वाच्चाव्याप्तिरिति
वाच्यं यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-
विषयताद्वयगर्भाव्यापकविषयताशून्यत्वस्य विवक्षितत्वात् । त-
थापि जातिमान्वह्निमानित्यत्र मेयत्वविशिष्टे वह्न्यभाववज्जा-
तिमति बाधेऽतिव्याप्तिवारणाय किञ्चिद्रूपावच्छिन्नविषयत्वाव्या-
पकाविषयताशून्यत्वस्यैव प्रवेश्यतया निरुक्तविशिष्टद्वयविषयता-
शून्येऽभाववत्तादृशघटत्वावच्छिन्नविषयताके गगनाभाववदभावव
त्कालीनघटो गगनाभाववानितिज्ञाने गगनाभाववत्तादृशघटत्वात्म
ककिञ्चिद्रूपावच्छिन्नविषयत्वाव्यापकाविषयताशून्यत्वस्य सत्त्वेनाभा
ववत्तादृशघटत्वस्य तादृशत्वसम्भवाद्व्याप्तेर्लाघवाच्च स्वावच्छिन्ना-
विषयकप्रतीतिविषयतायां प्रकृतानुमितिप्रतिबन्धकताविशिष्टान्यत्वं
विवक्षणीयं वैशिष्ट्यञ्च स्वावच्छेदकत्व स्वावच्छेदकविषयत्वावच्छि-
न्नजनतावच्छेदकत्वसम्बन्धावच्छिन्नस्वाभाववत्त्व स्वनिरूपितप्रतिब
ध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानव-
च्छेदकत्वैतत्त्रितयसम्बन्धेन एवञ्चाभाववान्तादृशघटइतिज्ञानीयविष-
यतायां प्रकृतानुमितिनिरूपितप्रतिबध्यतानवच्छेदकत्वस्य सत्त्वाद्ग
गनाभाववान्तादृशघटइतिज्ञानीयविषयतायामसत्त्वाच्च प्रतिबन्धक-
ताविशिष्टान्यत्वस्य सत्त्वासत्त्वाभ्यान्नाव्याप्त्यतिव्याप्ती बाधादिवि-
षयतायां स्वरूपासिद्ध्यादिप्रतिबन्धकताविशिष्टत्ववारणाय स्वावच्छे
दकत्वनिवेशः सत्प्रतिपक्षविषयतायान्तादृशविशिष्टान्यत्वसम्पत्तये
द्वितीयसम्बन्धनिवेशः बाधादिविषयतायां बाधप्रतिबन्धकताविशि-

ष्टान्यत्वसम्पत्तये तृतीयसम्बन्धनिवेशः एवञ्च जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद्ध्रदत्वावच्छिन्नविषयताया जनकतानवच्छेदकत्वेन विशिष्टान्यत्वासम्भवेन तादृशह्रदत्वात्मकविशिष्टान्तरतावच्छेदकरूपमादाय न सत्प्रतिपक्षाव्याप्तिः नच मेयत्वविशिष्टासाधारण्येऽतिव्याप्तिः वह्निव्यापकीभूताभावप्रतियोगिजलमितिज्ञानीयविषयताया जनकतानवच्छेदकत्वे विशिष्टान्यत्वविरहेऽपि वह्निव्यापकीभूताभावप्रतियोगिजलं ह्रदवृत्तीतिज्ञानविषयत्वस्य जनकतावच्छेदकत्वेन विशिष्टान्यतया तदवच्छेदकत्वस्यासाधारण्यत्वे सम्भवात् नच जलाभाववद्वह्निमत्कालीनपर्वतो वह्न्यभाववाञ्जलादित्यत्र मेयत्वविशिष्टवह्निमत्पर्वतेऽतिव्याप्तिः वह्निमत्पर्वतत्वावच्छिन्नविषयताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताविशिष्टत्वादितिति वाच्यं स्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रकृतानुमितित्वव्यापकप्रतिबन्धकताकालीनत्वसम्बन्धेन स्वावृत्तित्वस्यैव तृतीयसम्बन्धतया विवक्षणात् ।

नचैवमपि शुक्लजलवज्जलवत्कालीनह्रदः शुक्लजलाभाववाञ्जलाभावव्यादित्यत्र शुक्लजलवत्तादृशह्रदरूपबाधेऽव्याप्तिः जलवद्ध्रदत्वावच्छिन्नविषयतायाः स्वावच्छिन्नप्रतिबध्यतानिरूपितजलाभावव्याप्यवत्वावच्छिन्नविषयत्वावच्छिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताकालीनत्वसम्बन्धेन स्वस्मिन् वृत्तित्वसत्वेन स्वावृत्तित्वसम्बन्धविरहनिबन्धनप्रतिबन्धकताविशिष्टान्यतया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतया च जलवद्ध्रदत्वस्य तादृशविशिष्टान्तरतावच्छेदकत्वसम्भवादितिवाच्यं स्वावच्छेद्यप्रतिबध्यताविशिष्टतादृशप्रतिबन्धकताकालीनत्वस्यैव संसर्गत्वात् वैशिष्ट्यञ्च स्वनिरूपितत्वस्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन तथाचोक्तसम्बन्धेन स्वावृत्तित्वस्यैव जलवद्ध्रदत्वावच्छिन्नविषयतायां सत्वेन विशिष्टान्यत्वासम्भवान्नाव्याप्तिः एवञ्चानुमित्यव्यवहितप्राक्क्षणवृत्तिनिश्चयावृत्तिविषयतावच्छेदकत्वनिवेशेऽपि स्वावच्छिन्नाविषयकप्रतीतिविषयतायां तदेव निवेश्यं तावतैव ह्रदो वह्निमान् वह्न्यभाववद्भाववत्कालीनधूमादित्यत्राभाववद्ध्रदत्वस्य तादृशविशिष्टान्तरतावच्छेदकत्वविरहेणाव्याप्त्यप्रसक्तेः प्रतिबन्धकतागर्भलक्षणादरोऽव्यर्थः

इदमत्र बोध्यं शुक्लजलवज्जलवत्कालीनह्रदः शुक्लजलाभाववाञ्जलाभावव्याप्यादित्यत्रानुपदोक्तसंसर्गाप्रवेशेऽपि प्रकारान्तरेणाऽव्याप्तिवारणं सम्भवत्येव नच प्रतिबन्धकत्वघटितनिरुक्तौ प्रतिबन्धकतैक्यविवक्षया तत्सम्भवति तदनुगमश्च कर्तुं शक्यते तथाहि स्वावच्छिन्नाविषयकप्रतीतीया या प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयता तदवच्छेदकत्वं तादृशविशिष्टान्तरतावच्छेदकत्वमिति वैशिष्ट्यञ्च स्वानतिरिक्तवृत्तिविषयतावच्छेदकधर्मावच्छिन्नत्वस्वविशिष्टान्यत्वोभयसम्बन्धेन विशिष्टान्यत्वघटकवैशिष्ट्यञ्च प्रागुक्तयथाश्रुतत्रितयसम्बन्धेषु यस्य यस्योपादेयता तेन तेन बोध्यम् अनुमित्यव्यवहितप्राक्क्षणवृत्तित्वघटितकल्पे च विशेष्यदलघटकप्रतिबन्धकतयैव सहैक्यस्य करणीयतया तदनुगमस्य दुःशक्यत्वान्न तत्कर्तुं योग्यमिति वाच्यं यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविशेष्यताकं प्रकृतानुमितित्वव्यापकं तद्रूपावच्छिन्नप्रकारतानिरूपिततद्रूपावच्छिन्नविशेष्यताशाल्यनुमितित्वविशिष्टत्वं स्वावच्छिन्नाविषयकप्रतीतिविषयतायां निवेश्यं वैशिष्ट्यञ्च स्वाश्रयाव्यवहितप्राक्कालीननिश्चयावृत्तिविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नत्वस्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टान्यत्वोभयसम्बन्धेन वैशिष्ट्यञ्च प्रागुक्तत्रितयसम्बन्धघटकोपादेयसम्बन्धेन बोध्यमित्थमनुगमस्य सम्भवात्।

वस्तुतस्तु प्रतिबध्यताविशिष्टजन्यतानवच्छेदकत्वजनकतानवच्छेदकत्वोभयाभाववत्त्वमेव विषयिताविशेषणस्वैशिष्ट्यञ्चोह्यं भूयः प्रागावेदितञ्च यदि साध्यव्यापकाभाववत्पक्षादेर्बाधत्वं तदा मेयत्वविशिष्टे तत्रातिव्याप्तिवारणाय तादृशबाधादिविषयताभेदघटिततृतयाभावो निवेश्यः। यत्त्वनुमित्यनुव्यवहितप्राक्कालघटितकल्पे दोषघटितदोषेऽव्याप्तिवारणमशक्यमेव प्रतिबन्धकत्वगर्भनिरुक्तौ च प्रतिबन्धकतैक्यघटितलक्षणात्मकैतन्नेत्यादिकल्पे वक्ष्यमाण न दोष इति प्रतिबन्धकत्वाघटितकल्पस्योपेक्षाकृतेति तन्न यथाश्रुतप्रतिबन्धकत्वगर्भनिरुक्तावेवैतस्य शङ्कितत्वादिति चेन्नैवम्।

यत्रस्थलविशेषे दोषैकदेशविशेषज्ञानमनुमितेः पूर्वं स्वकारणविलम्बान्नियमेन नोत्पद्यते तत्र तद्दोषेऽव्याप्त्यापत्तेस्तादृशदोषैकदेशस्यापि तादृशविशिष्टान्तरत्वसम्भवादिति।

येतु गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र घटत्वाव-च्छेदेन गगनाभाववद्घटएव बाधो नतु गगनाभाववत्तादृशघटः तथा-सति विशिष्टान्तरविषययितायां प्रतिबन्धकताविशिष्टान्यत्वादिनिवे-शस्य प्रयोजनाभावात् ह्रदोवह्निमान् वन्ह्यभाववदभाववत्कालीनधूमादि त्यत्राभाववद्ध्रदत्वमादाय बाधेऽव्याप्तिवारणाय प्रतिबन्धकताघटित-कल्प एवादरणीयः नच वन्ह्यभाववद्ध्रदएवाव्याप्तिवारणाय तादृश प्रतिबन्धकताविशिष्टान्यत्वमेव विशिष्टान्तरविषयतायामवाच्यमि-तिवाच्यं प्रतिबन्धकत्वघटिततादृशपदार्थापेक्षया तत्र लाघवादिति वदन्ति ते च विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वघटित-लक्षणस्य यथाश्रुतस्यासत्त्वमात्रमालोच्य तस्य प्रतिबन्धकत्वानुप-युक्तभागेनाघटितस्य साध्याभाववत्पक्षात्मकस्यालक्ष्यतामाशंसमानाः चिन्तामण्याद्युक्तयथाश्रुतलक्षणादीनां दोषेण वर्णनस्य जलाञ्जलिमपि दित्सन्ति तेषां यत्र लक्षणस्य सत्त्वं तस्य सर्वस्य लक्ष्यत्वापात् यत्र च तस्यासत्त्वं तस्यालक्ष्यत्वप्रसङ्गाच्च। न च लक्षणेनैव लक्ष्य-विज्ञानम् इतरव्यावृत्तलक्ष्यस्वरूपविज्ञानस्य तदेकफलत्वात् तच्चे-ल्लक्षणं यत्र यत्र गतं स कथमलक्ष्यत्वेनावधारयितुं शक्यः स्या-च्चेत्तद्व्यावृत्तं धर्मान्तरे तदेव स्याल्लक्ष्यत्वेन कीर्त्तनमुभयोर्वि-निगमकाभावश्चेतिवाच्यम् ये हि लक्ष्यैकचक्षुषोऽपरिमितप्रज्ञा महर्षयस्तद्विज्ञानमेव लक्ष्यालक्ष्यभावे प्रमाणम् जानन्ति च ते साध्याभाववद्वृत्तित्वादिपर्यवसाय्यनैकान्तिकत्वमेव व्यभिचारम् का-लात्यये साध्याभावप्रमाकालेऽपदिष्टः प्रयुक्तो हेतुर्बाधितः तद्गतं च साध्याभाववत्पक्षपर्यवसिते कालात्ययापदिष्टमेव बाधं प्रकरण-समत्वादिकमपि तथा च हेतोः साध्याभाववद्वृत्तित्वे साध्यस्य हेतुमन्निष्ठाभावप्रतियोगित्वात् तस्मिन् व्यभिचारत्वेनावगते तदपि तेनावगम्यते एव समानत्वाच्च एवं पक्षस्य साध्याभाववत्त्वे बाधत्वेनावगते साध्याभाववत्पक्षनिष्ठाभावप्रतियोगिसाध्यपक्षा-वृत्तिसाध्यादयोऽपि तेनरूपेणावगम्यन्ते एव तुल्यत्वात् साम्यञ्च ग्राह्यभूतायाः पक्षे साध्यवत्त्वहेतुमत्त्वयोः हेतौ साध्यव्याप्यत्वस्य च स्वरूपतो विरोधिविषयकत्वेन विरुद्धत्वेन गृहीतविषयकत्वेन वा प्रतिबन्धकतावज्ज्ञानकत्वमेव। न च तद्दोषैकदेशे व्यावर्त्तकधर्मादौ वेति न ते दोषाः पक्षसाध्यहेतूनां यत्वतत्वादितुल्येन प्रकृतत्वेन

सर्वेषां ग्रहसम्भवेन सर्वत्र ते दोषत्वेन युज्ञानाः तथासति दोषत्वेन प्रातिस्विकरूपेण ज्ञायमानानां क्रियमाणमिदं शब्दानुगमफलं सकल साधारणं तत्पक्षसाध्यहेतुकस्थलीयानेकदोषानुगतं चैकं लक्षणं तेष्वेव वर्त्तमानं वर्त्तमानमेव तेषु साधुत्वेन निर्णीयते इत्यव्याप्त्यतिव्याप्त्योः स्वध्यवसानयोर्निरासाय परिः कृते तात्पर्यवर्णनीयमेवेत्यलमप्रस्तुतेन ।

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकमिति । अथ स्वानवच्छिन्नप्रकारतावच्छेदकावच्छिन्नार्थकमित्येव लाघवाद्वक्तुमुचितं न च यत्रैकदोषविषयकं ज्ञानं नियमतो दोषान्तरविषयकं तज्ज्ञानमपि तद्विषयकमेव नियमतो जायते तत्राव्याप्तिरिति वाच्यम् अघटितत्वस्याप्यनवच्छिन्नप्रकारतावच्छेदकावच्छिन्नरूपतायां एव स्वीकारात् । न च व्यभिचारकालीनघटेऽतिव्याप्तिः तादृशघटत्वानवच्छिन्नप्रकारतावच्छेदकतथाविधव्यभिचारत्वस्य तादृशघटत्वावच्छिन्नप्रकारतावच्छेदकत्वादिति वाच्यम् साक्षात्परम्परासाधारणावच्छेदकतानिरूपितत्वस्य स्वीकारात् अन्यथा यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयत्वघटितविशेष्यदलस्यैव निर्वाच्यतया प्रकारान्तरस्यासम्भवेन चैतल्लक्षणासम्भवप्रसङ्गादितिचेन्न यत्र पदार्थान्तरविषयकं ज्ञानन्नियमतोदोषविषयकं स्यात्तत्र पदार्थान्तरे विशेषणविशेष्यदलयोस्सत्त्वेनाति व्याप्तिसम्भावनयोक्तप्रकारस्य गदाधरेण परित्यक्तत्वात् तादृशपदार्थाविषयकप्रतीतिविषयकदोषविषयकत्वस्य पदार्थान्तरविषयकज्ञाने नियमतस्सत्त्वेन तथाविधस्थलसम्भावनानिबन्धनातिव्याप्तिसम्भावनाविरहात् ।

केचित्तु प्रतियोगित्वविषयत्वादिसाधारणैकावच्छेद्यत्वस्याभावेन प्रतियोगित्वनिष्ठावच्छेद्यत्वाभावप्रवेशोऽसम्भवस्यातिव्याप्तेर्वा प्रसङ्गेन विषयत्वनिष्ठावच्छेद्यत्वस्याभाव एव प्रवेशनीयस्तत्रापीच्छाविषयत्वज्ञानविषयत्वसाधारणैकजातीयावच्छेद्यत्वविरहेणेच्छाविषयत्वनिष्ठावच्छेद्यत्वाभावप्रवेशोष्यसम्भवाद्यापरया प्रतीतिविषयतानिष्ठस्य तस्याभावएव निवेश्य इत्येतत्सूचनायोक्तरीत्योपन्यास इतिवदन्ति।

शुद्धव्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराभिन्नत्वेपिनक्षतिरिति । ननु विशेष्यदले यत्पदार्थतया दोषतावच्छेदकगतरूपप्रवेशस्यैव सिद्धान्तितत्वेन

विशेषणदले स्वपदार्थतयापि तत्प्रवेश एव करणीयः तथाच स्वभिन्नं यत्तादृशरूपं तदवच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वरूपपर्य्यवसितं तत्र न मेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गसम्भावनापीत्युक्तग्रन्थसङ्गतिरिति। नच धीविशेषविषयत्वात्मकसमुदायत्वस्यानेकस्यापि विनिगमनाविरहेण वह्न्यभाववद्ध्रदत्वावच्छिन्नसकलविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकतया वह्न्यभाववद्ध्रदत्वगतैकसमुदायत्वभिन्नापरतादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताकत्वस्यैव वह्न्यभाववद्ध्रदविषयकज्ञाने सत्त्वेनासम्भवापत्तिरितिवाच्यं प्रकृतानुमितिप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्विषयताविशिष्टरूपवत्त्वस्यैव लक्षणत्वात् वैशिष्ट्यञ्च स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नतादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेनेतिचेन्न तादृशविषयताविशिष्टवह्नित्वगतैकत्वादिकमादाय वह्न्यादिरूपबाधैकदेशेऽतिव्याप्त्यापत्तेः स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपभिन्नत्वविवक्षणे दोषाभावेपि तद्विवक्षायामप्यन्तरपदस्य पारिभाषिकत्वतादवस्थ्यात्। यत्र स्थलविशेष एकदोषविषयकज्ञानस्य नियमतोदोषान्तरविषयकत्वं तत्र तद्दोषेऽव्याप्तेः सम्भावितत्वाच्चेतिध्येयम्।

ननु विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेनेतिदीधितेर्विशिष्टान्तराघटितत्वस्य यद्रूपविशिष्टविशेषणताया एव प्रतीयमानतया तदुपेक्ष्य निरुक्तप्रतीतिविषयतावच्छेदकत्वात्मकयद्रूपविशेषणे तत्तात्पर्य्यवर्णनवीजं दर्शयति।

मेयत्वविशिष्टव्यभिचारादेरपीति। एतेन प्रागुक्तस्वावच्छिन्नत्वादिव्यावृत्तिप्रदर्शनमुल्लङ्घ्य चरमोपात्तप्रतीतिविषयतावच्छेदकत्वनिवेशनप्रयोजनस्य प्रथममुपदर्शनं रीतिविरुद्धमितिशङ्का निरस्ता उक्तग्रन्थस्य तत्परत्वाभावात्। केचित्तु व्यभिचारकालीनघटादावतिव्याप्तिवारणाय चरमस्य प्रतीतिविषयतावच्छेदकत्वस्य स्वावच्छिन्नाविषयकत्व-

दलनिवेशानिवेशयोस्सार्थक्यं सम्भवति स्वावच्छिन्नाविषयकत्वस्य मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणायोपादानन्तु प्रतीतिविषयतावच्छेदकत्वोपादान एव सम्भवदुक्तिकमेतन्निवेशाभावं कृतेपि तन्निवेशेऽतिव्याप्तितादवस्थ्यादिति व्युत्क्रमेण फलप्रदर्शनमितिवदन्ति।

यद्यपि सर्वंगगनवदित्यत्र गगनाभाववत्सर्वत्वाश्रयाविषयकप्रतीत्यप्रसिद्ध्या बाधादावव्याप्तिवारणमपि स्वावच्छिन्नाविषयकत्वस्य फलं सम्भवति तथापि मेयत्वविशिष्टव्यभिचारातिव्याप्तेः पुरस्फूर्त्तिकत्वात् तद्दोषवारणोपात्तविशेषणघटितलक्षणे तद्दोषतादवस्थ्यस्य प्रबलत्वाच्च मेयत्वविशिष्टव्यभिचारातिव्याप्तिवारणमेव तत्प्रयोजनत्वेन कीर्त्तयति मेयत्वविशिष्टव्यभिचारत्वाश्रयेति।

दुर्घटत्वादिति नच मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वेन घटाद्यवगाहिप्रतीतौ सत्त्वसम्भवेन दुर्घटत्वकथनमसङ्गतमिति वाच्यं व्यभिचारत्वबाधत्वाद्याश्रयाविषयकप्रतीतेः व्यभिचारत्वादिना घटादिविषयिण्या विषयतावच्छेदकत्वस्य व्यभिचारत्वादौ सम्भवेनासम्भवापत्त्या तादृशप्रतीतिविषयतावच्छेदकत्वमुपेक्ष्य तादृशप्रतीतिविषयवृत्तित्वस्यैव वाच्यतया मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकप्रतीतिविषयवृत्तित्वस्य व्यभिचारत्वेऽसम्भवेनातिप्रसङ्गसम्भवात् व्यभिचारत्वस्य सामानाधिकरण्यसम्बन्धेन साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकरूपतया तद्विषयकप्रतीतेः सामानाधिकरण्यघटकतया व्यभिचारविषयकत्वाच्चेतिभावः।

यद्यपि प्रतीतिविषयतावच्छेदकत्वनिवेशापेक्षया प्रतीतिविषयवृत्तित्वनिवेश एव गौरवात्स शङ्कितुमनर्हः तथापि विशेष्यदले यत्पदार्थतया दोषतावच्छेदकगतसमुदायत्वप्रवेशे प्रतीतिविषयतावच्छेदकतायाः प्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वरूपाया एव वाच्यतया प्रतीतिविषयवृत्तिवृत्तित्वापेक्षया तस्य गुरुत्वात् प्रतीतिविषयतावच्छेदकत्वापेक्षया लघुर्गुरुर्वाभवतु अन्यादृशनिवेशोहि न सम्भवति किंत्वेकमेव प्रतीतिविषयतावच्छेदकत्वनिवेशनमितिप्रौढिप्रकटनाशयाद्वा तथाशङ्कनस्य युक्तत्वमस्त्येवेत्याशयेन प्रतीतिविषयवृत्तित्वनिवेशनमाशंक्य दूषयति।

स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्येत्यादिना ननु तादृशप्रतीतिविषयत्वस्य तादृशप्रतीतिविषयवृत्तित्वापेक्षया लघुत्वेन तदेव शङ्कितुम

हमितिचेन्न अनुपदमेव तदाशङ्कनस्यास्वपरतायाउक्तत्वात् तादृशप्रतीतिविषयतावच्छेदकत्वमेव किमित्युक्तं कथंसम्भवदपि तदतिरिक्तभावोच्चदित्याशङ्कन एवतात्पर्य्यात्।

प्रमेयंगगनवद्वाच्यत्वादित्यादाविति नच वह्न्यभाववद्धृदत्वाद्यवच्छिन्नाविषयप्रतीतिविषयतावच्छेदकवह्न्यभावव्याप्यवद्धृदत्वाद्याश्रयाविषयकत्वस्य वह्न्यभाववद्धृदत्वाद्यवच्छिन्नाविषयकप्रतीतौ विरहाद सम्भवसम्भवेऽव्याप्त्युद्भावनमनुचितमितिवाच्यम् अन्यत्र प्रसिद्धस्य लक्षणस्य लक्ष्येऽसत्त्वनिबन्धनदोषापेक्षया लक्षणस्वरूपाप्रसिद्धिनिबन्धनदोषस्य बलवत्त्वेन तदनुसन्धाय प्रमेयङ्गगनवदित्यादावव्याप्तेरेवोद्भावनस्य कृतत्वादितिध्येयम्।

ज्ञानस्येत्यत्रज्ञानपदार्थइति ननु तादृशविषयताशून्यत्वस्य ज्ञानपदार्थविशेषणत्वे तादृशविषयताशून्यनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य तादृशविषयताशून्यत्वतद्घटकसकलपदार्थेषु प्रसङ्गेन दोषतावच्छेदकधर्म्मविशेषणत्वापेक्षयात्रैव गौरवमितिचेन्न तादृशविषयताशून्यत्वस्य ज्ञानपदार्थे उपलक्षणतयैव निवेशाद्गौरवाभावात् तथासति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टरूपवत्त्वस्य समुदितलक्षणत्वम् वैशिष्ट्यञ्च स्वनिरूपितपरम्परीयावच्छेदकतावत्त्व स्वविशिष्टप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकत्वावच्छिन्नावच्छेदकतावृत्तित्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वसमानाधिकरणतादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यत्वरूपाभावीयप्रतियोगितयापरम्परानिरूपितत्वसम्बन्धेन अवच्छेदकतावृत्तित्वञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्नत्वसम्बन्धेन बोध्यम् दोषतावच्छेदकगतरूपविशेषणत्वे च तादृशप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्रूपविशिष्टरूपावच्छिन्नवत्त्वस्य समुदितलक्षणत्वम् वैशिष्ट्यञ्च स्वतादात्म्यस्ववृत्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-

नुयोगितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतिबन्धकतावृत्त्यभा-वीयप्रतियोगितानिरूपितपरम्परावच्छेदकतात्वावच्छिन्नावच्छेदक-तापरम्परानिरूपितत्ववत्प्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छे-दकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन बोध्यमन-योर्लाघवं गौरवञ्च व्यक्तमेवेति ।

अथ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य रूपविशे-षणत्वापेक्षया स्वावच्छिन्नाविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनि-श्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावः प्रतिबन्धकतायामस्ति तादृ-शरूपत्वमेव निवेशनीयं लाघवात् एतदनुगमश्च प्रागुक्तानुगमद्वयघ-टकप्रथमानुगमवद्बोध्यः विशेषश्च निश्चयनिष्ठावच्छेदकतावैशिष्ट्य-घटकद्वितीयसम्बन्धे बोध्यः तथाहि स्वविशिष्टावच्छेदकतानिरूपि-तावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकत्व-निष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता-निरूपितपर्य्याप्तिनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगि-त्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छे-दकत्वनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-दकतानिरूपितावच्छेदकतावत्प्रकृतानुमितिप्रतिबन्धकतावृत्त्यभावी-यप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टत्वं सम्बन्धः स्ववैशिष्ट्यं पूर्ववत् अवच्छेदकतावैशिष्ट्यञ्च स्वसमाना-धिकरणस्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयता-शून्यत्वरूपाभावीयप्रतियोगितया परम्परानिरूपितावच्छेदकत्वसम्ब-न्धेन बोध्यमितिचेन्न अत्रापि भट्टाचार्य्यतात्पर्य्योपवर्णने क्षत्यभावात्॥

यत्तु यादृशस्थलविशेषे मेयत्वविशिष्टव्यभिचारविषयकज्ञानात्मकमे-वाप्रामाण्यज्ञानास्कन्दितव्यभिचारज्ञानं समूहालम्बनात्मकंजायते-ऽन्यथात्वप्रामाण्यज्ञानानास्कन्दितमेव तत्रातिव्याप्तिसम्भावनया ता-दृशविवक्षा न कृतेति तन्न प्रतीतिविषयतावच्छेदकत्वविवक्षायामपि य-द्रूपपदेन व्यभिचारत्वस्य धारणासम्भवात् व्यभिचारत्वावच्छिन्नविष-यताशाल्यव्यापकविषयताशून्यप्रकृतानुमितिप्रतिबन्धकतावन्निश्चया-प्रसिद्धेरतिव्याप्तितादवस्थ्यात् । नचाव्यापकविषयताशून्यत्वं यद्रूपा-वच्छिन्नविषयताशालिनिश्चये न निवेश्यमपितु यद्रूपावच्छिन्नविषय-त्वाव्यापकविषयताशून्यज्ञानीयत्वं यद्रूपावच्छिन्नविषयतायामेव नि-

वेश्यमितिवाच्यं तथासति तद्घटकज्ञान एव स्वावच्छिन्नविषयता-शून्यत्वस्यापि विशेषणत्वोपगमेन दोषासम्भवात् प्रतीतिविषयताव-च्छेदकत्वपर्य्यन्तविवक्षाया निःप्रयोजनत्वतादवस्थ्यात् विशिष्टान्तर-तावच्छेदकरूपावच्छिन्नविषयताशून्यत्वस्य निश्चयविशेषणत्वेन तुल्य-तायास्स्वावच्छिन्नाविषयकत्वस्य निश्चयविशेषणतायां सत्वेनात्र दो-षसम्भावनायां तत्रापि तस्यासम्भवात् सम्भावनया परित्यागस्यो-भयत्र तुल्यत्वादिति ।

अथ ज्ञानद्वयसाधारणप्रतिबन्धकताऽप्रति प्रत्येकज्ञानविषयविशि-ष्टत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावदिति प्रागुक्तेस्तादृशपदार्थ-घटकप्रतिबन्धकतावच्छेदकताया अनतिरिक्तवृत्तित्वरूपता प्रतीयते तत्रेदम्विचार्य्यते प्रतिबन्धकतावच्छेदकतायाः स्वरूपसम्बन्धरूपत्वे बाधाद्येकदेशविषयतायाः तथात्वापत्याऽसम्भवः स्यादतोऽनतिरि-क्तवृत्तित्वरूपता वाच्या तत्र तद्विवक्षायामपि विशिष्टान्तरतादृशरूपा-प्रसिद्ध्याऽसम्भववारणायाव्यापकविषयताशून्यज्ञानीयत्वं यद्रूपाव-च्छिन्नविषयतायामवश्यन्निवेशनीयं तथासति बाधाद्येकदेशविषय-ताया बाधज्ञानीयाया अव्यापकविषयताशून्यज्ञानीयत्वविरहात् तद-न्यस्याश्च प्रतिबन्धकतावच्छेदकत्वासम्भवादसम्भवाप्रसक्तेरनतिरि-क्तवृत्तित्वन्न निवेश्यं नच संयोगवज्जलञ्जलाभाववदित्यत्र जलवत्संयो-गवज्जलरूपबाधेऽव्याप्तिः जलत्वेन घटप्रकारके जलवत्संयोगवज्ज-लमितिज्ञाने संयोगवज्जलत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्य-त्वस्य सत्वेन तदीयसंयोगवज्जलत्वावच्छिन्नविषयतायाः प्रतिबन्ध-कतावच्छेदकत्वादितिवाच्यं यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपाव-च्छिन्नविषयता यद्रूपावच्छिन्नविषयत्वाव्यापिका तद्रूपावच्छिन्नविषय-तानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वस्य विवक्षितत्वात् ।

नचैवमपि घटोनद्रव्यमित्यत्र द्रव्यत्ववद्घटरूपबाधेऽव्याप्तिः घटो-द्रव्यमितिज्ञानस्य स्वरूपतोद्रव्यत्वप्रकारकस्य घटत्वावच्छिन्नविषय-त्वाव्यापकाविषयताशून्यत्वेन तदीयघटत्वावच्छिन्नविषयतायाः प्रति-बन्धकतावच्छेदकत्वादिति वाच्यं स्वावच्छेद्यत्वस्वनिरूपितत्वान्यत-रसम्बन्धेन यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयत्वस्य विवक्षितत्वात् स्वरूपतोद्रव्यत्ववद्घटत्वावच्छिन्नविषयताविशिष्टघ-टत्वावच्छिन्नविषयताया अव्यापकीभूताया निरुक्ते ज्ञाने सत्वेनाव्या-प्त्यसम्भवात् ।

यद्यपि समवायादेस्संसर्गविधया स्वरूपतोभान उक्तवाध एव घटत्वेन गुणान्नगाहिघटोद्रव्यमितिवाधभ्रममादायाव्याप्तिस्सम्भवति तथापि यद्रूपावच्छिन्नविषयत्वसामान्ये प्रतिबन्धकतावच्छेदकत्वविवक्षणे सर्व्वदोषवारणसम्भवात् ।

यत्तु वाधादौ सर्वत्राव्याप्तिः अभाववान्वह्न्यभाववानितिनिश्चयविशिष्टाभाववान् ह्रदइतिनिश्चयस्य प्रतिबन्धकत्वेनाभाववद्ध्रदत्वावच्छिन्नविषयतासामान्यस्यैव प्रतिबन्धकतावच्छेदकत्वादिति तन्न गगनाभाववदभाववत्कालीनघटोगगनवानित्यत्र गगनाभाववत्तादृशघटरूपवाधेऽव्याप्तिवारणाय मेयत्वविशिष्टतादृशवाधेऽतिव्याप्तिवारणाय च स्वावच्छिन्नाविषयकप्रतीतिविषयतायां प्रतिबन्धकताविशिष्टान्यत्वस्य तादृशजन्यतानवच्छेदकत्वपर्य्यवसितप्रकृतानुमितिप्रतिबन्धकताविशिष्टप्रतिबध्यतानवच्छेदकत्वतादृशजनकतानवच्छेदकत्वोभयाभावस्य वा विशेषणतायाः प्रागुक्तत्वेन तावतैव तद्दोषवारणसम्भवादितिचेदत्रकेचित् ।

प्रतिबन्धकतानतिरिक्तवृत्तित्वापेक्षया प्रतिबन्धकताविशिष्टान्यत्वादेरतिगुरुत्वादनतिरिक्तवृत्तित्वमेव निवेश्यं गगनाभावदभाववत्कालीनघटोगगनवानित्यत्र वाधस्य दोषान्तरघटितदोषतुल्यतया तत्राव्याप्तेरिदानीमिष्टत्वादिति वदन्ति ।

वस्तुतस्तु प्रकृतानुमितिप्रतिबन्धकताविशिष्टान्यत्वं निरवच्छिन्नस्वरूपेण वह्न्यभाववज्जलवत्कालीनत्वे सति निरवच्छिन्नस्वरूपेण जलाभाववद्वह्निमत्कालीनह्रदो वह्निमाञ्छुक्लजलाभावादित्यत्र शुक्लजलवत्तादृशह्रदे तादृशप्रतिबन्धकताविशिष्टान्यविशिष्टान्तरीभूतजलवत्तादृशह्रदत्वावच्छिन्नाविषयतामादायाव्याप्त्या हेयं तादृशजन्यतानवच्छेदकत्वघटितोभयाभावश्च वह्न्यभाववज्जलवत्कालीनत्वेसति जलाभाववद्वह्निमत्कालीनत्वेसति वह्न्यभाववज्जलव्याप्यवत्कालीनत्वेसति जलाभाववद्वह्निव्याप्यवत्कालीनह्रदो वह्निमाञ्छुक्लजलाभावादित्यत्र शुक्लजलवत्तादृशह्रदएकरूपेण प्रतिबन्धकत्वाभावपक्षे तादृशोभयाभाववद्विशिष्टान्तरजलवत्तादृशह्रदविषयतामादायाव्याप्तिप्रसङ्गेन हेय इति प्रागुक्तोभयाभावविशेषविशेषितविशिष्टद्वयविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयत्वे प्रतिबन्धकतावच्छेदकत्वमेव गगनाभाववत्तादृशघटशुक्लजलवत्तादृशह्रदादावव्याप्तिवारणायानुसरणीयः

तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वाद्ह्रदेऽभाववद्ह्रदत्वावच्छिन्नविषयतामादाय वह्न्यभाववद्ह्रदादावव्याप्तिः स्यादिति तद्वारणायानतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेवादरणीयम् एवञ्च विनापि स्थलविशेषसम्भावनां ह्रदो वह्निमान्वह्न्यभाववदभाववत्कालीनधूमादित्यत्राभाववद्ह्रदे प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्तिनिश्चयावृत्तितद्रूपावच्छिन्नविषयत्वविवक्षायां तादृशविशिष्टान्तरत्वापत्त्या बाधेऽव्याप्तिप्रसङ्गेनानुमितिप्रतिबन्धकत्वाविवक्षा ग्रन्थकृतां सङ्गच्छत इत्यवधेयम्।

यत्तु गोत्वमवृत्तीत्यत्र मेयत्वविशिष्टगोत्ववद्रूपबाधेऽतिव्याप्तिः विशिष्टान्तरतावच्छेदकगोत्ववत्स्वरूपधर्मावच्छिन्नविषयत्वस्य गोत्वप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायामनवच्छेदकत्वादिति तत्तुच्छं तादृशविषयतायां स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वस्योपपादितत्वादिति।

अथ धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादाविति यद्यपि धूमव्यभिचारिवह्निपक्षकस्थलेऽप्यव्याप्तिः सम्भवति तथापि तत्र तादृशवह्नित्वसामानाधिकरण्येन साध्यतायां बाधाभावादवच्छेदकावच्छेदेन साध्यतायामेवाव्याप्तिः तादृशवह्निमतः पक्षत्वे चोभयथैव सेति तादृशवह्निमत्पर्यन्तस्य पक्षत्वानुधावनम् इदमुपलक्षणं ह्रदत्वावच्छेदेन वह्नेस्साध्यतायां ह्रदत्वावच्छेदेन वह्न्यभाववद्ह्रदे सामानाधिकरण्येन बाधघटितेऽप्यव्याप्तिस्सम्भवति।

परेतु स्वावच्छिन्नविषयत्वावच्छिन्नत्वं स्वावच्छिन्नविषयित्वावच्छिन्नसामानाधिकरण्येन या बुद्धिस्तत् प्रतिबध्यतानिरूपितप्रतिबन्धकताभिन्नत्वं चैतदुभयसम्बन्धेन स्वाभाववत्त्वस्य प्रतिबन्धकताविशेषणत्वे स्वपदेनावच्छेदकावच्छेदेन बाधत्वस्योपादानेऽवच्छेदकावच्छेदेन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतायां स्वाभाववत्त्वविरहात्स्वाभाववत्सामानाधिकरण्येन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतावच्छेदकत्वस्यसामानाधिकरण्येन बाधत्वे विरहान्नोक्तबाधेऽव्याप्तिः सामानाधिकरण्येन बाधत्वस्यस्वपदोपादेयत्वे ऽवच्छेदकावच्छेदेन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतायां द्वितीयसम्बन्धस्यस्वपदार्थव्यधिकरणत्वेन स्वाभाववत्तया मेयत्वविशिष्टतादृशबाधत्वावच्छिन्ने नातिव्याप्तिः द्वितीयसम्बन्धघटकविषयत्वे स्वावच्छिन्नत्वस्य स्वावच्छेद-

कतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन दोषतावच्छेदकघटकविशेष्यदलघटकरूपपरस्वपदार्थे वृत्तित्वरूपस्य विवक्षितत्वेन सामानाधिकरण्येन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतायां तादृशस्ववृत्तिविषयत्वावच्छिन्नत्वस्यासम्भवेन द्वितीयसम्बन्धस्य व्यधिकरणत्वसम्भवात् स्वावच्छिन्नविषयत्वावच्छिन्नत्वस्य स्वरूपसम्बन्धरूपतानतिरिक्तवृत्तित्वरूपतावेति विचारणीयमेतदनुगमश्च सुलभएवेतिवदन्ति ।

नचयद्रूपावच्छिन्नविषयत्वमित्यादि अथात्र यद्यपि प्राथमिकप्रतिबन्धकतावच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे द्वितीयस्यापितस्य तद्रूपत्वे च ह्रदोवह्निमान्धूमादित्यादौ वह्नित्वावच्छिन्नविषयत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयतावच्छेदकाभावत्वावच्छिन्नविषयकप्रतीक्षिविषयतावच्छेदकत्वस्य वह्नित्वे सत्वेन तदवच्छिन्नेऽतिव्याप्तिः तादृशविषयतावच्छेदकाभावत्वादिकमादाय वह्न्यभाववद्ध्रदादौ लक्षणासम्भवश्च द्वितीयस्य च तस्य यद्रूपावच्छिन्नविषयत्वसामान्ये विवक्षायामसम्भवः धूमाभाववान्वह्न्यभाववद्ध्रदकालीनजलवानितिनिश्चयविशिष्टतादृशजलवद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया अपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वावच्छिन्नतया तदवच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतासामान्येप्यसम्भवात् द्वितीयस्यानतिरिक्तवृत्तित्वरूपत्वे तु सुतरान्तथा प्रथमस्यापि यद्रूपावच्छिन्नविषयत्वसामान्ये विवक्षायां द्वितीयस्यानतिरिक्तवृत्तित्वरूपत्वे वह्न्यभावद्ध्रदत्वावच्छिन्नविषयत्वसामान्यावच्छिन्नायां वाधप्रतिबन्धकतायां धूमभाववान् वह्न्यभाववानितिनिश्चयविशिष्टवह्न्यभाववान्ह्रदइतिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाञ्च कस्या अपि विषयताया अनतिरिक्तवृत्तिरूपावच्छेदकत्वा सम्भवेनासम्भवापत्तिः यद्रूपावच्छिन्नविषयत्वसामान्यविवक्षितत्वेच पाषाणमयत्ववत्पर्वतादावतिव्याप्तिः एतस्यैव समुदितलक्षणत्वेन विशेष्यदलस्य स्वतन्त्रस्याभावादतः प्राथमिकमवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपमेव वक्तव्यम् यथाचोक्ताऽतिव्याप्तिर्वारणाय प्रकारान्तरं सम्भवत्यपगतदोषं लघुच तथोक्तमधस्तात्, विशेष्यदलघटकताद्विचारे तथापि द्वितीयन्तत् स्वरूपसम्बन्धरूपमेव वाच्यं तदपि वह्नित्वाद्येकदेशावच्छिन्नविषयत्वस्य वारणाय यद्रूपावच्छिन्नवि-

धयत्वसामान्ये विवक्षणीयं तथाच वह्न्यभाववज्जलवद्वृत्तिजलवद्धदेऽ तिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वमपि न निवेश्यमेतावतैव तद्वारणात् अभाववद्धृदत्वावच्छिन्नविषयतामादाय वह्न्यभाववद्धृदादौ न पूर्ववदत्र दोषसम्भवः अभाववद्धृदत्वावच्छिन्नविषयत्वसामान्याव- च्छिन्नप्रकृतानुमितिनिरूपितज्ञानवैशिष्ट्याव च्छिन्नप्रतिबन्धकताया व- ह्न्यभाववद्धृदत्वावच्छिन्नविषयत्वानिरूपकानिश्चयत्वव्यापकत्वविरा- हत् ।

अथ गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्राभाववत्ता- दृशघटत्वावच्छिन्नविषयत्वमादायातिव्याप्तिवारणाय प्रोक्तपरिष्कृत- विशिष्टद्वयविषयताशून्यज्ञानीयत्वं तु निवेश्यमेवेतिचेत् निवेश्यतां- काक्षतिः ।

यत्तु धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यत्र व्यभिचारघटितबाधे- ऽव्याप्तिः तादृशप्रतिबन्धकतासामान्यान्तर्गतव्यभिचारप्रतिबन्धक- तायां बाधविषयत्वस्य तथाविधबाधप्रतिबन्धकतायाञ्च व्यभिचारप्रति- बन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकत्वस्यासम्भवादिति तन्तुच्छम् यद्रूपावच्छिन्नविषयत्वसामान्ये ऽवच्छेदकतावत्त्वस्य स्वरू- पत्वाश्रयनिरूपितावच्छेद्यत्वस्याश्रयावच्छेद्यनिरूपितविषयत्वावच्छेद्य- त्वाद्यन्यतमघटकोपादेयसम्बन्धैर्विवक्षायां दोषासम्भवात् बाधज्ञानीय- व्यभिचारविषयत्वस्य व्यभिचारप्रतिबन्धकतावच्छेदकतया तदाश्र- यविषयत्वावच्छेद्यनिरूपितविषयत्वावच्छेद्यत्वस्य बाधविषयतासामा- न्ये तत्र सम्भवात्, एतेन गोत्वमवृत्तीत्यत्र मेयत्वविशिष्टगोत्ववद्रूपबाधे ऽतिव्याप्तिः यथा बाधविषयत्वस्येव धर्मान्तरावच्छिन्नविषयसामान्य- स्यापि स्वरूपसम्बन्धरूपतादृशप्रतिबन्धकतानिरूपितावच्छेदकत्व- विरहेण विशिष्टान्तरतावच्छेदकतादृशरूपाप्रसिद्धया वार्य्यते तथैव तत्राव्याप्तिः प्रसज्यते इत्यनतिरिक्तवृत्तित्वमेव वाच्यमितिनिरस्तम् गोत्ववत्त्वावच्छिन्नविषयत्वसामान्य उक्तान्यतमसम्बन्धेन तादृश- प्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात् नच गोत्ववत्त्वस्यातादृशत्वेऽपि विशिष्टान्तरतावच्छेदकत्वविरहात् विपरीतबाधविषयत्वस्य गोत्व- त्वावच्छिन्नप्रकारताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वास- म्भवादव्याप्तिरितिवाच्यं समवायेन गोत्वप्रकारकनिश्चयस्य सम- वायसम्बन्धावच्छिन्नाधेयतया धर्म्मिप्रकारकगोत्वविशेष्यकनिश्चयस्य

च पृथक्पृथक्प्रतिबन्धकत्वकल्पनापेक्षया समवायसम्बन्धातिरिक्त-सम्बन्धानवच्छिन्नगोत्वत्वावच्छिन्नविषयतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नविषयताकनिश्चयत्वेनैकस्यैव प्रतिबन्धकत्वस्य लाघवेन कल्पनीयतया आधेयतयेदम्विशिष्टगोत्वत्वावच्छिन्नविषयतासामान्यस्य तादृशप्रतिबन्धकतावच्छेदकत्वसम्भवेन तादृशगोत्वत्वस्य तादृशविशिष्टान्तर तावच्छेदकत्वसम्भवादव्याप्तिविरहादितिचेदत्रकेचित् ।

अभावो गगनत्ववानाश्रयत्वादित्यत्रासाधारण्येऽव्याप्तिः आधेयत्वावदभावत्वावच्छिन्नविषयत्वसामान्यस्यैव तादृशप्रतिबन्धकतावच्छेदकत्वादिदानीमेकरूपेण प्रतिबन्धकत्वस्यानिराकरणीयत्वात् अन्यथात्रासम्भवस्य वक्ष्यमाणत्वात् एवं जलव्यापकवह्न्यभावसमानाधिकरणजलवद्‌ह्रदस्य सत्प्रतिपक्षत्वे तत्रापि जलवद्‌ह्रदत्वावच्छिन्नविषयत्वमादायाव्याप्तिरतोनतिरिक्तवृत्तित्वरूपताद्वितीयावच्छेदकतायामवश्यम्विवक्षणीया अन्यादृशतद्वारणप्रकारस्य गौरवानापादकस्य विरहात् नच कथमसाधारण्यविषयतायान्तादृशावच्छेदकत्वसम्भव इति वाच्यं यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकाभावयिप्रतियोगितानिरूपितपरम्परावच्छेदकत्वस्य तादृशप्रतिबन्धकतासामान्ये विवक्षितत्वात् अभावश्च स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकताशून्यत्वासाधारणविषयताशून्यत्वोभयाभावरूपोविवक्षितः एतन्निवेशप्रक्रियाचासकृदावेदितेतिनेहप्रतन्यते नचैवमनतिरिक्तवृत्तित्वमनिवेश्य यद्रूपावच्छिन्नविषयताशून्यत्वदलनिविशिष्टविषयतायामसाधारण्यघटकविषयताभिन्नत्वमेव निवेश्यमितिवाच्यं मेयत्वविशिष्टासाधारण्येऽतिव्याप्तेः असाधारण्येऽव्याप्तिवारणायैव वासाधारण्यघटकविषयतात्वस्यासाधारण्यविषयताव्यावृत्तस्य वाच्यतया ततोनतिरिक्तवृत्तित्वपक्षेऽविवक्षणीयसत्प्रतिपक्षघटकविषयताभिन्नत्वस्य सत्प्रतिपक्षविषयतासाधारणस्य निवेशनीयतया ततश्चानतिरिक्तवृत्तित्वस्यैव लघुतयोपादेयत्वादितिप्राहुः ॥

व्यभिचारत्वादिरूपस्वावच्छिन्नेति ननु वह्न्यभाववान्ह्रदः ह्रदेवह्न्यभाव इतिज्ञानयोः स्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नवह्न्यभावत्वावच्छिन्नविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वावच्छिन्नविषयतानिरूपकनिश्चय

त्वेनैकमेव प्रतिबन्धकत्वम् एवं धूमाभाववह्निरूपितवृत्तित्ववान्व-
ह्निर्वह्नौ धूमाभाववद्वृत्तित्वमितिज्ञानयोरप्येकमेव प्रतिबन्धकत्वमबो-
ध्य नच स्वस्वनिरूपितस्वरूपेण वन्ह्यभाववान्ह्रद इति ज्ञानी-
यप्रतिबन्धकत्ववारणाय वह्न्यभावत्वावच्छिन्नविषयतानिरूपितसांस-
र्गिकविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैव प्रति-
बन्धकत्वस्य वाच्यतया नानुगमसम्भव इतिवाच्य वन्ह्यभावत्वाव-
च्छिन्नप्रकारतानिरूपितत्वविशिष्टस्वरूपत्वावच्छिन्नत्वाभावह्रदत्वा
वच्छिन्नप्रकारतानिरूपितत्वविशिष्टाधेयत्वत्वावच्छिन्नत्वाभावोभया-
भाववत्वस्य संसर्गताविशेषणत्वेनुगमसम्भवात्॥ अथवा स्वरूपत्वाव-
च्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवन्ह्यभावत्वावच्छिन्न-
विषयतानिरूपितसंसर्गतानिरूपिता या आधेयतात्वावच्छिन्नावच्छे-
दकताभिन्नावच्छेदकत्वानिरूपितह्रदत्वावच्छिन्नविषयता तन्निरूपकनि-
श्चयत्वेन प्रतिबन्धकत्वस्य वाच्यत्वात् तथाच विपरीतबाधत्वमेव
तादृशरूपं प्रसिद्ध्यतीति नासम्भव इतिचेन्न अप्रामाण्यज्ञानानुरोधेन
प्रतिबन्धकताभेदस्योक्तप्रायत्वात् । नचाप्रामाण्यज्ञानानुगमरीतिर्व्याप्ति-
ग्रहोपायजगदीशव्याख्याविवृतावुक्तत्वेनप्रतिबन्धकताभेदो निःप्रमा
णकइतिवाच्यं तत्रान्यतमत्वादिघटितपरम्परासम्बन्धघटितवैशिष्ट्य
स्यानुगमकतायां उक्तत्वेन कार्यकारणभावप्रतिबध्यप्रतिबन्धकभा-
वावच्छेदककोटावन्यतमत्वादेः प्रवेशस्य निराकृतत्वेन तादृशपरम्प-
रायाः संसर्गतानभ्युपगमेन वा अप्रामाण्यज्ञानतद्धर्मिकाप्रामाण्यज्ञानत
द्धर्मिकाप्रामाण्यज्ञानादीनामभावप्रतियोगितया प्रतिबन्धकतावच्छे-
दककोटौ प्रवेशस्य दुश्शकयत्वेन चैकरूपेण प्रतिबन्धकत्वासम्भवात् ॥
अस्तुवैकरूपेण प्रतिबन्धकत्वं तथापि मेयत्वविशिष्टव्यभिचारवारणा-
योपन्यस्तलक्षणे व्यभिचारविशिष्टबाधादावतिव्याप्तिवारणाय विशि-
ष्टान्तरतावच्छेदकरूपे स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यप्रती-
तिविषयतावच्छेदकत्वं देयं तथाच विपरीतबाधत्वस्य तादृशविशि-
ष्टान्तरत्वेप्युक्तप्रतीतिविषयतावच्छेदकत्वाभावादसम्भवो दुरुद्धर-
एव नच कथमुक्तविशिष्टेऽतिव्याप्तिरितिवाच्यं द्वितीयावच्छेदकत्व-
स्याप्यनतिरिक्तवृत्तित्वात्मकतया व्यवस्थापितत्वेन बाधविशिष्ट-
व्यभिचारत्वस्य तादृशविशिष्टान्तरत्वसम्भवेन तदवच्छिन्नविषयक-
प्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारविशिष्टबाधत्वे सत्वात् य-

द्रूपावच्छिन्नविषयत्वसामान्येऽवच्छेदकत्वस्यान्यतमसम्बन्धेन विवक्षायामपि वाधविशिष्टव्यभिचारत्वावच्छिन्नविषयतासामान्य एव वाधव्यभिचारनिश्चयप्रतिबन्धकताद्वयावच्छेदकत्वस्यान्यतमसम्बन्धेन सत्त्वेनातिव्याप्तेस्सम्भवाच्च। एतेन स्वावच्छिन्नविषयतात्यत्र स्वपदस्य दोषतावच्छेदकगतरूपपरत्वेन स्ववृत्तिप्रकारताशून्यप्रतीतिप्रकारतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वमेव विवक्षणीयं तथाच वाधत्वगतसमुदायत्ववृत्तिप्रकारताशून्यप्रतीतिप्रकारतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशमेयत्वविशिष्टवाधत्वगतसमुदायत्वे सम्भवान्नासम्भवः एवं द्वितीयप्रतिबन्धकतावच्छेदकत्वस्य स्वव्यापकतत्कत्वरूपतया व्याप्यकताघटकसम्बन्धतया स्वनिरूपितप्रतिवध्यतावच्छेदकधर्मपर्य्याप्तावच्छेदकताकप्रतिवध्यतानिरूपितप्रतिबन्धकतावत्त्वस्य प्रवेशेपि नासम्भवः प्रतिबन्धकताया अनेकत्वेपीतिनिरस्तम्।

मेयत्वविशिष्टवाधत्वगतसमुदायत्वे विपरीतवाधत्वगतसमुदायत्वे चोक्तातिव्याप्तिवारणाय विवक्षितस्याव्यापकविषयताशून्यप्रतीतिविषयतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्य विरहादसम्भवस्य जागरूकत्वादिति।

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वोभयाभावः केवलान्वयि यस्य स्वस्य तद्धर्मवत्त्वमेव विवक्षणीयम् एवञ्चैकरूपेण प्रतिबन्धकत्वाभावपक्षे नाव्याप्तिरतिव्याप्तिर्वेतिचेन्न स्वत्वस्याननुगततया व्यभिचारत्वादेः बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन व्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वेन चोभयाभावमात्रस्य केवलान्वयित्वासम्भवात् यत्किञ्चिदुभयाभावस्य केवलान्वयित्वमादाय लक्षणसमन्वयस्यैव वह्नित्वाद्यवच्छिन्नेऽतिप्रसङ्गस्य सम्भवात् स्वतादात्म्यनिरुक्तोभयसम्बन्धावच्छिन्नतादृशस्वाभाववत्त्वोभयसम्बन्धेन धर्म्मविशिष्टधर्म्मवत्त्वविवक्षायाञ्च घटत्वादेरुक्तोभयसम्बन्धस्य व्यधिकरणत्वेन तेन तदभावस्य घटत्वादौ सत्त्वया तमादायातिप्रसक्तेः एकरूपेण प्रतिबन्धकत्वाभावे यथाश्रुतस्यैवैकरूपेण प्रतिबन्धकत्वे चैतस्याप्यसम्भवदोषेण सदोषतयो-

भयपक्षनिर्दोषवक्ष्यमाणेतेनकल्पस्यैवानुसर्त्तुमुचितत्वेनैतस्योपेक्षणीयत्वादित्यपि केचित् प्राहुः एतेन विशेष्यदलस्य स्वातन्त्र्येणोपादाने न घटादावतिप्रसङ्ग इतिनिरस्तम्।

अथ स्वावच्छिन्नविषयत्वावच्छिन्ना यावत्यः प्रतिबन्धकताः प्रत्येकं स्वावच्छेदकत्वसम्बन्धेन यद्रूपघटकतावच्छेदकरूपावच्छिन्नविषयतात्वव्यापिकाः तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेवोच्यतां तावतैवासम्भवस्य वारणसम्भवात् मेयत्वविशिष्टबाधत्वादीनां यत्पदेनोपादातुं शक्यतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टबाधत्वादौ विरहात् बाधत्वादौ सत्वाच्च नातिव्याप्तिरव्याप्तिश्च व्यभिचारघटितबाधत्वावच्छिन्नविषयत्वावच्छिन्नयावत्प्रतिबन्धकत्वान्तर्गतबाधप्रतिबन्धकतावच्छेदकत्वस्य तादृशबाधत्वघटकतावच्छेदकव्यभिचारत्वावच्छिन्नविषयत्वसामान्ये विरहात् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपघटकतावच्छेदकत्वस्य स्वस्मिन्नसम्भवात् नच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्म्मावच्छिन्नविषयतात्वस्याप्रतिबन्धकीभूतैकदेशादिज्ञानविषयतासाधारण्यादसम्भव इतिवाच्यं तथाविधयत्किञ्चिद्धर्म्मावच्छिन्नविषयतात्वव्यापकत्वस्य विवक्षितत्वात् न चाननुगमः वस्तुविशिष्टवस्तुत्वस्यैव समुदितलक्षणत्वात् वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन व्यापकता च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्म्मविशिष्टत्वसम्बन्धेन धर्म्मवैशिष्ट्यञ्च स्वावच्छिन्नविषयतात्वव्यापकत्वत्वसम्बन्धेन व्यापकताचावच्छेदकतासम्बन्धेन एवञ्च व्यभिचारविशिष्टबाधादावपि नातिव्याप्तिसम्भवः तादृशबाधत्वावच्छिन्नप्रतिबन्धकताद्वय एव तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकबाधत्वव्यभिचारत्वरूपधर्म्मवैशिष्ट्यसम्भवात् सर्व्वं गगनवदित्यत्र गगनाभाववद्घटपटादिज्ञानानामेकरूपेण प्रतिबन्धकत्वपक्षे गगनाभाववद्घटत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकत्वे गगनाभाववद्घटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकगगनाभाववत्पटत्ववैशिष्ट्यसद्भावनिबन्धनाव्याप्तिवारणाय स्वविशिष्टधर्म्मविशिष्टत्वस्यैव संसर्गत्वात् स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकप्रतीतिवि·

षयतावच्छेदकत्वस्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानविषयतावच्छेदकत्वोभयसम्बन्धेन यद्वा स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वमेक एव सम्बन्धः स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकत्वस्वावच्छिन्नविषयत्वाव्यपकविषययताशून्यत्वोभयसम्बन्धेन बोध्यं धर्म्मवैशिष्ट्यं प्राग्वत्।

अथ गगनाभाववद्भाववत्कालीनघटोगगनवानित्यत्र बाधे जलव्यापकवह्न्यभावसमानाधिकरणजवद्ध्रदरूपसत्प्रतिपक्षे हेतुमत्पक्षघटितासाधारणत्वे चाव्याप्तिः बाधत्वाद्यवच्छिन्नाविषयकप्रतीति विषयतावच्छेदकाभावद्घटत्वहेतुमत्पक्षत्वाद्यवच्छिन्नाविषयत्वसामान्यस्यैव तादृशबाधत्वाद्यवच्छिन्नप्रतिबन्धकत्वसामान्यावच्छेदकत्वेन बाधत्वादेर्विशिष्टान्तरतावच्छेदकत्वसम्भवादितिचेदत्रकेचित्।

स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबध्यकताविशिष्टविषयतानवच्छेदकत्वस्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नजन्यतानिरूपितजनकताविशिष्टविषयतानवच्छेदकत्व स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वैतत्तृनयाभावस्योक्ततृतयसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वतादात्म्योभयसम्बन्धेन वस्तुविशिष्टत्वस्य समुदितलक्षणत्वेन विवक्षिततया नोक्तदोषसम्भवः प्रतिबन्धकतावैशिष्ट्यञ्च स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितबध्यतावच्छेदकत्व तादृशप्रतिबध्यतावच्छेदकविषयितावदन्यत्वैतदुभयसम्बन्धेन।

अथवा तादृशप्रतिबध्यताविशिष्टत्वमेकमेव सम्बन्धः वैशिष्ट्यञ्च स्वावच्छेदकत्वस्वावच्छेदकविषयितावदन्यत्वोभयसम्बन्धेनेतिबोध्यम् विषयितावत्ता च स्वव्याप्यत्वस्वाव्यापकत्वोभयसम्बन्धेन जनकतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वावच्छेदकविषयितावदन्यत्वोभयसम्बन्धेन विषयितावत्ताचोक्तोभयसम्बन्धेन बोध्या प्रतिबन्धकतावैशिष्ट्यघटकप्रथमसम्बन्धोपादानात् अभाववत्तादृशघटत्वावच्छिन्नविषयतायास्तादृशप्रतिबध्यतावच्छेदकगगनाभाववत्तादृशघटत्वावच्छिन्नविषयताव्याप्यत्वविरहेण तथाविधविषयतावदन्यत्वेऽप्यभाववत्तादृशघटे नातिव्याप्तिः द्वितीयसम्बन्धोपादानात् मेयत्वाविशि-

द्व्यभिचारत्वाद्यवच्छिन्नविषयत्वस्य तादृशप्रतिबध्यतावच्छेदकत्वे-पि नातिव्याप्तिः तद्विषयतायास्तादृशप्रतिबध्यतावच्छेदकव्यभिचार-विषयतावत्त्वस्यैव सत्त्वात् नच स्वानवच्छेदकविषयताशून्यज्ञानीयत्व-स्यैवास्तु लघोस्संसर्गतेति वाच्यं वह्न्यभाववद्ध्रदवद्धूमे ऽतिव्या-प्तेः स्वावच्छेदकविषयतावदन्यत्वस्य संसर्गतामिहाय तादृशप्रतिब-ध्यतावच्छेदकविषयतावदन्यत्वस्य संसर्गत्वानुधावनात् प्रतिबन्धकता-वच्छेदकीभूताभाववद्घटत्वावच्छिन्नविषयतावत्त्वस्य गगनाभावव-त्तादृशघटत्वावच्छिन्नविषयत्वे सत्त्वेपि न तादृशघटत्वावच्छिन्नेऽव्याप्तिः व्याप्यत्वस्य संसर्गघटकतया प्रवेशात् गगनाभावदभाववत्कालीनस-र्वपक्षकगगनसाध्यकस्थले गगनाभाववत्तादृशघटत्वावच्छिन्नविषय-तायां गगनाभाववत्पटत्वावच्छिन्नतादृशप्रतिबध्यतावच्छेदकविषय-तावत्त्वस्य स्वाव्यापकत्वसम्बन्धेन सत्त्वेपि न तादृशबाधेऽव्याप्तिः स्वा-व्यापकत्वनिवेशात् तादृशबाधविषयत्वस्य तादृशप्रतिबध्यतावच्छेद-कस्ववैशिष्ट्यवत्त्वेपि नदोषः जनकतावैशिष्ट्यघटकसम्बन्धव्यावृ-त्तिस्तूक्ता तादृशप्रतीतिविषयतानवच्छेदकत्वस्य प्रवेशात् ह्रदोमानि-त्यत्र वह्निव्यापकाभाववद्ध्रदादौ नाव्याप्तिः अत्र वह्न्यभाववान्ह्रदइ-तिज्ञानीयवह्नित्वावच्छिन्नविषयतायां तादृशप्रतिबध्यतावच्छेदिकायाः कस्या अपि विषयितायाः व्याप्यत्वाव्यापकत्वोभयोर्विरहेण तादृश-प्रतिबध्यतावदन्यत्वसम्भवेन वह्नित्वावच्छिन्नेऽतिव्याप्तिः स्यादि-ति स्वावच्छेदकत्वं यद्रूपावच्छिन्नविषयकत्वं प्रतिबध्यतावच्छेदकं त-द्रूपावच्छिन्नत्वमेव बोध्यम् ॥ नच मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छि-न्नविषयतायामपि तादृशप्रतिबध्यतावच्छेदकव्यभिचारत्वावच्छि-न्नविषयतायाः कस्या अपि व्याप्यत्वव्यापकत्वोभयविरहादति-व्याप्तिरिति वाच्यं स्वावच्छेदकविषयतावच्छेदकधर्म्मवदन्यत्वस्यै-व संसर्गतया प्रवेश्यत्वात् धर्म्मवत्ताच स्वावच्छिन्नविषयत्वाभावव-न्निरूपितवृत्तितानवच्छेदकस्वावच्छिन्नविषयतात्वकधर्म्मावच्छिन्न-त्वस्वावच्छिन्नविषयताकत्वसमानाधिकरणभेदप्रतियोगितावच्छेद-कतावच्छेदकस्वावच्छिन्नविषयतात्वकधर्म्मावच्छिन्नत्वोभयसम्बन्धे-न बोध्या।

अथ जनकतावच्छेदकविषयतावदन्यत्वमप्युक्तरीत्यैव परिष्का-र्य्यं तथासति जनकतावच्छेदकत्वमपि न स्वरूपसम्बन्धविशेषः

तादृशजलत्वावच्छिन्नविषयताविशिष्टत्वस्यैव सत्प्रतिपक्षविषयतायां सत्त्वेन तत्राव्याप्तिप्रसङ्गात् अपि त्वनतिरिक्तवृत्तित्वरूपमेव यद्वा यद्रूपावच्छिन्नविषयतासामान्ये जनकतावच्छेदकत्वं तद्रूपावच्छिन्नत्वरूपमेव विवक्षणीयं तथा च मेयत्वविशिष्टासाधारण्येऽतिव्याप्तिः तथाविधजनकतावच्छेदकत्ववद्वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदत्वावच्छिन्नविषयतावदन्यत्वस्य मेयत्वविशिष्टासाधारण्यत्वावच्छिन्नविषयतायां सत्त्वादिति चेन्न ।

तादृशजनकतानवच्छेदकत्वासाधारणविषयताभिन्नत्वोभयाभावस्यैव जनकतावच्छेदकविषयतावदन्यत्वघटकजनकतावच्छेदकत्वरूपत्वात् तादृशजनकतावच्छेदकत्वस्य वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयतायामपि सत्त्वेन तद्विशिष्टत्वस्यैव मेयत्वविशिष्टासाधारण्यत्वावच्छिन्नविषयतायां सत्त्वादिति वदन्ति तच्चिन्त्यम् ।

वह्न्यभाववज्जलवत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदेऽतिव्याप्तिः जलवत्तादृशह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नविषयत्वसामान्ये प्रतिबन्धकतावच्छेदकत्वस्यासम्भवादुक्तनिश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वे मानाभावेन वह्न्यभाववज्जलवानितिज्ञानीयविषयत्वस्यापि प्रतिबन्धकतावच्छेदकत्वासम्भवात् न चैकरूपेण प्रतिबन्धकत्वपक्षे तत्सम्भवइतिवाच्यं तदभावपक्षसाधारण्येनैवैतल्लक्षणस्य शङ्कितत्वात् निरवच्छिन्नस्वरूपेण वह्न्यभाववज्जलवत्कालीनत्वे सति निरवच्छिन्नस्वरूपेण जलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र जलवत्तादृशह्रदत्वावच्छिन्नविषयतायाः प्रतिबन्धकताविशिष्टत्वात् गगनाभाववत्तादृशघटत्वावच्छिन्नविषयतायां प्रतिबध्यतावच्छेदकीभूतैकदेशविषयतावत्त्ववारणाय प्रतिबध्यतावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपस्यैव वाच्यत्वात् जन्यतावच्छेदकताघटितसम्बन्धनिवेशेऽपि वह्न्यभाववज्जलवत्कालीनत्वादिकालनित्वचतुष्टयविशेषितह्रदपक्षकवह्निसाध्यके प्रागुक्तस्थले जलवत्तादृशह्रदेऽतिव्याप्तेः न च स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतान्यतान्तर्गतैकप्रतिबन्धकतावच्छेदकत्वशरीरे प्राक्परिष्कृतविशिष्टद्वयाघटितत्वप्रवेशे नकस्यापि दोषस्यावकाश इति वाच्यं तथा सति यद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छि

विषयत्वावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपस्वक्तव्यं तच्छरीरेऽपि प्राक्परिष्कृतविशिष्टद्वयविषयताशून्यत्वमन्तर्भावणीयं तावतैव गगनाभाववत्ताहशघटेऽव्यभिचारणसम्भवादतिगुरुतरस्योक्तत्रितयाभावस्योपक्षणीयतायां एवोचितत्वात् अथास्त्वेतदेव निवेशनमेतत्परित्यागोनोचितइतिचेन्नैवम् ।

एतस्य वक्ष्यमाणैतेनकल्पापेक्षया ऽतिगुरुत्वेनोपेक्षितत्वात् याहशस्थलविशेषे व्यभिचारविषयकं ज्ञानन्नियमतोबाधविशिष्टव्यभिचारविषयकमेव तत्रान बाधविशिष्टव्यभिचारेऽतिव्याप्तिः एतेनकल्पे तद्वारणञ्च सम्भवतीत्यतोपि वास्य परित्यक्तमुचितत्वात् किञ्च यत्रस्थलविशेषे मेयत्वविशिष्टबाधविषयकं ज्ञानव्यावर्त्तकधर्मदर्शनप्रमात्मकमेव व्यावर्त्तकधर्मविशिष्टपक्षात्मकविशिष्टादिज्ञानमपि ताहशबाधज्ञानात्मकमेव तत्र मेयत्वविशिष्टबाधेऽव्यातिव्याप्तिः सम्भाव्यत एव मेयत्वविशिष्टबाधत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकताद्वयान्तर्गतव्यावर्त्तकधर्मदर्शनप्रतिबन्धकत्वस्य मेयत्वविशिष्टबाधत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नविषयत्वावच्छिन्नत्वविरहेण मेयत्वविशिष्टबाधत्वस्योपादानानर्हत्वात् घटकालीनमेयत्वविशिष्टबाधत्वस्यैवोपादेयत्वात् तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकमेयत्वविशिष्टबाधत्वावच्छिन्नविषयत्वावच्छिन्नत्वस्य प्रतिबन्धकताद्वय एव सत्वात् एतेनकल्पे च व्यावर्त्तकधर्मदर्शनप्रतिबन्धकतावच्छेदकव्यावर्त्तकधर्मविशिष्टपक्षविशिष्टविषयित्वस्य बाधप्रतिबन्धकतावच्छेदककेवलबाधविषयित्वस्य च मेयत्वविशिष्टबाधत्वावच्छिन्नानिरूपितत्वान्नातिव्याप्तिसम्भावना इदञ्च यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयित्वे स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्याविशेषणत्व एव सम्भवतीति वस्तुतो यत्र न व्यभिचारः पदार्थान्तरविशिष्टसाध्याभाववत्पक्षपदार्थान्तरविशिष्टहेत्वभाववत्पक्षयोर्नियमेनैकमेव ज्ञानन्तदपि व्यभिचारभ्रमात्मकमेव सदोत्पद्यते तत्र पदार्थान्तरविशिष्टबाधेऽतिव्याप्तिः एतेनकल्पेऽव्यापकविषयताशून्यज्ञानीयत्वस्य द्वितीयप्रतिबन्धकतावच्छेदकविषयत्वविशेषणत्वेपि च नातिप्रसङ्गः एतेन विशिष्टद्वयाघटितत्वेयद्रूपवृत्तित्वघटितोभयाभावगर्भेऽवश्योपादेये व्यावर्त्तकधर्मविशिष्टपक्षविषयितायास्ताहशत्वविरहात् मेयत्वविशिष्टबाधविषयताया एव

तादृशत्वेनातिव्याप्तिः एतेन कल्पेपि दुर्वारता स्यादित्येतादृशस्थल-सम्भावनमनुचितमेव बाधविशिष्टव्यभिचारज्ञाने बाधत्वावच्छिन्न-विषयताविशिष्टव्यभिचारत्वावच्छिन्नविषयताया निरुक्तोभयाभाव-शालिन्या एव सत्त्वेन विशिष्टद्वयविषयताशून्यत्वविरहात् पूर्वपक्षेपि नदोष इतिनिरस्तमितिध्येयम् ।

नच स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यानवच्छेदकविषयतावच्छेदकः कश्चिदिति अन्योभयन्नावच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे बाधत्वादीनामपि स्वपदेनोपादातुं शक्यतया असम्भवः प्रथममात्रस्यानतिरिक्तवृत्तित्वरूपत्वेपि स एव द्वितीयमात्रस्य तत्त्वे च मेयत्वविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिः मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वावच्छिन्नायां बाधप्रतिबन्धकतायां धूमाभाववान्मेयत्वविशिष्टवह्न्यभाववानितिनिश्चयविशिष्टमेयत्वविशिष्टवह्न्यभाववान्ह्रदइतिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाश्च कस्यापि यद्रूपावच्छिन्नविषयताया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविरहेण स्वपदेन मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वस्य ग्रहणासम्भवात् स्वपदेन पक्षविशेषणमेयत्वघटितबाधत्वात्मकविशिष्टधर्मस्यैवोपादेयत्वात् तद्धर्मावच्छिन्नविषयत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकत्वसामान्य एव धूमाभाववद्वह्न्यभाववत्कालीनवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वस्य तादृशावच्छेदकत्वात् तादृशस्वपदार्थावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वे सत्त्वात् यदि च मेयत्ववान् वह्न्यभाववान् मेयत्ववान् ह्रदइतिनिश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकताया अभाववान्धूमाभाववानितिनिश्चयविशिष्टाभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाश्च प्रतिबन्धकत्वसामान्यान्तर्गतायाः तादृशैकधर्मावच्छिन्नविषयत्वावच्छिन्नत्वविरहात् तादृशरूपाप्रसिद्ध्या नातिव्याप्तिरित्युच्यते तदा तद्रीत्याऽव्याप्तिरेवेतिगृहाण अतएवावच्छेदकत्वयोरुभयोः स्वरूपसम्बन्धरूपत्वमेव विषयत्वसामान्ये च तद्विवक्षणान्नासम्भवइत्यपिनिरस्तम् ।

अथ स्वावच्छिन्नविषयत्वसामान्यावच्छिन्नप्रतिबन्धकत्वे ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यसत्प्रतिपक्षविषयत्वद्वयानवच्छिन्नत्वोभयाभाववत्त्वम्विशेषणमित्युक्तरीत्या नाव्याप्तिरिति त-

त्र सत्प्रतिपक्षे हेतुमत्पक्षघटितासाधारण्ये च हेतुमत्पक्षतावच्छेदकावच्छिन्नाविषयत्वमादायाऽव्याप्त्यापत्तेः एवं गगनाभाववदभाववत्कालीनघटो गगनाभाववानित्यस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वे मेयत्वविशिष्टगगनाभाववत्तादृशघटत्वस्य स्वपदेनाग्राह्यत्वापत्तिः अभाववत्तादृशघटत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकतापक्षे चाभाववत्तादृशघटत्वावच्छिन्नविषयतामादाय बाधे तत्राऽव्याप्त्यापत्तिः अतोऽनतिरिक्तवृत्तित्वस्यैव परिष्कृतविशिष्टद्वयाविषयताशून्यत्वघटितस्य वाच्यत्वात् तदपेक्षया लघोरदुष्टस्य चोक्तदोषवारकप्रकारस्यासम्भवदुक्तिताया असकृदावेदितत्वात् उक्तोभयाभावादिविशेषितप्रतिबन्धकत्वनिवेशापेक्षया विशिष्टद्वयविषयताशून्यत्वविनाकृतानतिरिक्तवृत्तित्वस्यातिलघुत्वेन प्रथमावच्छेदकत्वस्याप्येवन्तद्रूपताया एव युक्तत्वादिति ध्येयम् ॥

ननूभयत्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वमुपेक्ष्य अनवच्छिन्नप्रकारतावच्छेदकत्वमेवोच्यतां लाघवादिति चेन्न यत्र बाधविषयकं ज्ञानंनियमतो दोषान्तरविषयकं तज्ज्ञानमपि नियमतोबाधविषयकं तत्र बाधत्वस्य स्वपदेन ग्रहणसम्भवात्तत्राऽव्याप्तिः स्यादिति प्राथमिकतादृशप्रतीतिविषयतावच्छेदकत्वस्यावश्यनिवेश्यत्वात् द्वितीयस्यापि यत्र मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानन्नियमतोव्यभिचारविशिष्टबाधविषयकं तत्र मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्य स्वावच्छिन्नविषयत्वावच्छिन्नबाधव्यभिचारज्ञानप्रतिबन्धकत्वद्वयावच्छेदकविषयितानिरूपकतावच्छेदकस्य चाप्रसिद्ध्या मेयत्वविशिष्टव्यभिचारत्वस्य स्वपदेन ग्रहणासम्भवात् तदवच्छिन्नेऽतिव्याप्तेः नच व्यभिचारविशिष्टबाधत्वस्यैव तथाविधस्य प्रसिद्धिरिति वाच्यं तादृशबाधत्वावच्छिन्नविषयकज्ञानस्य नियमतोमेयत्वविशिष्टव्यभिचारविषयकत्वाभ्युपगमात् नच बाधविशिष्टव्यभिचारत्वस्य तादृशस्य प्रसिद्धिरित्यपि वाच्यं सर्वं गगनवद्वाच्यत्वादित्यत्र गगनाभाववद्घटादौ बाधविपरीतबाधादिनिश्चययोरेकरूपेण प्रतिबन्धकत्वे दोषमात्रे चाव्याप्तिवारणाय तादृशविषयितानिरूपकतावच्छेदकधर्मे स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्यापि विशेषणताया वा-

च्यतया बाधविशिष्टव्यभिचारत्वस्य तदभावात् यदि च प्रथमकल्पमेकरूपेण प्रतिबन्धकत्वाभावव्यवस्थापनाशयाद् दूषयित्वा द्वितीयस्यैतत्कल्पस्यानुसृततयानैकरूपेण प्रतिबन्धकत्वाभ्युपगमोनोचित इत्युच्यते तदा बाधविशिष्टव्यभिचारज्ञानस्यापि मेयत्वविशिष्टव्यभिचारविषयकतादृशज्ञानात्मकतां नियमेन स्वीकृत्य दोषोनुसन्धेयः न च तत्र स्वपदग्राह्यताप्रसिद्धिः व्यभिचारवैशिष्ट्यस्यैव तत्त्वादिति उक्तस्थलद्वयीयाव्याप्त्यतिव्याप्तिभ्यां स्वभिन्नत्वतद्रूपभिन्नत्वविवक्षापि निरस्ता वेदितव्या ॥ द्वितीये बाधविशिष्टव्यभिचारादावतिव्याप्तिरपि दोषः बाधविशिष्टव्यभिचारत्वगतसमुदायत्वस्य स्वपदेनोपादानासम्भवात् बाधवैशिष्ट्यगतसमुदायत्वाभिन्नत्वस्य तादृशसमुदायत्वे सम्भवादिति बोध्यम् ॥

तथासति धूमव्यभिचारीत्यादि अथ तथाविधं यत्स्वं तदवच्छिन्नविषयतावत्त्वतदवच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वोभयाभाववत्त्वं यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चये निवेश्यं धूमव्यभिचारिवह्निमत्त्वस्य स्वपदग्राह्यत्वेपि तदवच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य बाधज्ञाने विरहेणोभयाभावसत्त्वान्नैवं दोषइतिचेन्न बाधविशिष्टव्यभिचारादावतिव्याप्तेः तज्ज्ञाने स्वपदग्राह्यबाधवैशिष्ट्यावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वविरहेणोभयाभावसत्त्वात् ।

ननु स्वावच्छिन्नविषयत्वावच्छिन्ना यावत्यः प्रतिबन्धकताः तत्प्रत्येकं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्धर्मावच्छिन्नविषयत्वावच्छिन्नं तादृशस्वपदार्थस्यैव विवक्षितत्वे स्वपदेन बाधविशिष्टव्यभिचारत्वस्य ग्रहणसम्भवात् तदवच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वतद्रूपावच्छिन्नविषयतावत्त्वोभयोस्तज्ज्ञाने सत्वेनोक्तातिव्याप्तेर्न सम्भवः नचाननुगमः पदार्थविशिष्टपदार्थवदन्यत्वस्यैव यद्रूपावच्छिन्नविषयताशालिनिश्चयविशेषणत्वात् वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वोभयसम्बन्धेन व्यापकता च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वसम्बन्धेन धर्मवत्ता च स्वावच्छिन्नविषयत्वावच्छिन्नसम्बन्धेन पदार्थवत्ता च स्वावच्छिन्नविषयतावत्त्वस्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वोभय-

सम्बन्धेन अवच्छेदकताया अनतिरिक्तवृत्तित्वादिरूपता विचारितैव मेयत्वविशिष्टासाधारण्यत्वादीनां स्वपदग्राह्यतासम्पत्तिः प्रागावेदितेत्यत्राप्यूह्या गगनाभाववद्भाववत्कालीनघटो गगनवानित्यादौ बाधाद्यव्याप्तिवारणप्रकारोऽपि परिदर्शित एवेति सोऽप्यत्रानुसन्धेयइतिचेत् एतस्य वक्ष्यमाणेतनकल्पापेक्षया गुरुत्वेनोपेक्षणीयत्वात् स्वावच्छिन्नविषयत्वावच्छिन्नेत्यादिप्रथमकल्पे स्थलविशेषीयत्वेन सम्भावितातिव्याप्तेः प्राक्दर्शिताया अत्रापि दुरुद्धरत्वाच्चेति ॥

स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकताघटितप्रथमकल्पस्य समुदायलक्षणत्वेन तत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितत्वादिव्यावृत्तेः विशेष्यदलघटकतद्व्यावृत्तिसमत्वादुपेक्षितत्वेऽप्यत्र तद्व्यावृत्तेर्विलक्षणतया प्रदर्शनीयत्वेन सा प्रदर्श्यते तथाहि तादृशप्रतिबध्यतानिरूपितत्वाप्रवेशे मेयत्वविशिष्टबाधत्वाद्यात्मकस्वपदार्थाप्रसिद्ध्याऽसम्भवापत्तिः तादृशबाधत्वावच्छिन्नविषयत्वावच्छिन्नत्वस्य मेयत्वप्रकारतानिरूपितबाधत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायामपि सत्वेन तदवच्छेदकविषयतावच्छेदकस्य विशिष्टान्तरत्वासम्भवात् अनुमितिनिष्ठप्रतिबध्यतानिवेशेप्ययमेव दोषः साध्यतावच्छेदकादेः फलं यद्यपि यथाश्रुतविशिष्टान्तराघटितत्वइव ह्रदोघटाभाववद्ह्रदकालीनवह्निमान्वह्न्यभाववद्भूतलकालीनह्रदोवह्निमानित्यादौ बाधाद्यव्याप्तिवारणञ्च सम्भवति तथापि मेयत्वविशिष्टवह्न्यभाववद्ह्रदादौ प्रमेयत्वाभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय वह्न्यभावविशिष्टवह्न्यभाववद्ह्रदादौ वह्न्यभावत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय चातिव्याप्तिवारणमेव फलं सम्भवति तत्प्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्यापि तत्तद्विशिष्टबाधत्वावच्छिन्नविषयत्वावच्छिन्नतया तद्घटिततादृशप्रतिबन्धकतासामान्यावच्छेदकविषयतावच्छेदकतादृशप्रतीतिविषयतावच्छेदकरूपाप्रसिद्ध्या तस्य तस्य स्वपदेनोपादेयत्वासम्भवात् साध्यतावच्छेदकाप्रवेशे द्वितीयस्य पक्षतावच्छेदकाप्रवेशे प्रथमस्यैव स्वपदेनोपादेयत्वात्सर्वेषां युगपत्प्रवेशेतु स्वपदार्थप्रसिद्धिर्दुघटैव एवं हेतुतावच्छेदकादिप्रवेशफलमप्यूह्यम् ॥

स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकयत्किञ्चिद्विषयत्वमित्यादि

अत्रापि प्रथमकल्पवदनतिरिक्तवृत्तित्वापेक्षया लघुभूतविशेषणानि-वार्य्यपाषाणमयत्ववत्पर्वतातिप्रसङ्गवारकतया प्रथमस्य हेतुमत्पक्ष-घटितासाधारण्यादौ हेतुमत्पक्षतावच्छेदकात्रच्छिन्नविषयत्वमादाया-व्याप्तेर्लघुभूतविशेषणान्तराग्निवारणीयाया निवारकतया द्वितीयस्य चानतिरिक्तवृत्तित्वरूपतावश्यम्विवक्षणीयेति बोध्यम् ॥

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धक-तावच्छेदकमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितायां मेयत्ववि-शिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वयाऽतिप्रसङ्गवारणाय तादृशवि-षयतात्वसामानाधिकरण्येनानिरूपितत्वानिवेशलाभाय यत्किञ्चिदि-ति अन्यथा शाब्दस्वाभाव्यादवच्छेदकावच्छेदेनैव तत्प्रतीतिः स्या दितिभावः ॥

नचैतस्य स्वत्वघटितत्वादननुगमः धर्म्मविशिष्टधर्म्मवत्त्वस्यैव समु-दायार्थत्वात् वैशिष्ट्यञ्च स्वतादात्म्य स्वावच्छिन्नविषयताशालिनि-श्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकाभावीयप्रतियोगितानिरूपितप-रम्परावच्छेदकतावद्धर्म्मावच्छिन्नविषयितानिरूपितस्वावच्छिन्नानि-रूपितत्वसम्बन्धावच्छिन्नसम्बन्धितावद्धर्म्मावच्छिन्नाविषयकप्रतीति-विषयतावच्छेदकत्वोभयसम्बन्धेन बोध्यम् ॥

अथ तादृशसम्बन्धितावद्धर्म्मभिन्नत्वमेवास्तु द्वितीयसम्बन्धो-लाघवादिति तन्न यादृशस्थलविशेषे मेयत्वविशिष्टव्यभिचारविषय-कं ज्ञानं नियमतोबाधभ्रमात्मकं तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्या-प्तेः तत्र मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्ध-कतासामान्यावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नवि-षयतायामेव सत्त्वेन तस्याश्च धर्म्मान्तरावच्छिन्नानिरूपिततया तत्त-द्धर्म्मभिन्नत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वात् तादृशधर्म्मावच्छि न्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य संसर्गत्वे च तथाविधमेय-त्वविशिष्टव्यभिचारविषयितायाः स्वनिरूपकज्ञानविषयतद्घटकपदा-र्थतावच्छेदकधर्म्मावच्छिन्नेनाप्यनिरूपिततया तदवच्छिन्नाविषयक प्रतीविषयतावच्छेदकत्वस्य तत्र विरहात् ॥ एतेन तादृशसम्बन्धिता-वद्धर्म्मानवच्छिन्नविषयितावच्छेदकत्वमेवास्तु सम्बन्धो लाघवा-दित्यपि प्रत्युक्तम् अतएव तादृशपरम्परावच्छेदकतावद्धर्म्मावच्छिन्न-विषयितावृत्त्यभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिवृत्तित्वा

वच्छिन्नवद्विषयितानिरूपकतावच्छेदकत्वमेवास्तु सम्बन्धः यादृशयादृशधर्म्मावच्छिन्नानिरूपितमित्युक्त्या कूटनिवेशस्य यथाश्रुतेपि प्रतीयमानतयाऽत्र लाघवस्य स्फुटत्वात् नच व्यभिचारत्वगतसमुदायत्ववृत्तित्वाभावमेयत्वविशिष्टव्यभिचारत्वगतसमुदायत्वाभावतत्तद्विषयितानिष्ठतत्तद्व्यक्तित्वाभावानां चालनीन्यायेन तथाविधविषयतावृत्तित्वेन कूटान्तर्गततया तेषां स्वावच्छिन्नविषयितामात्रे विरहादसम्भव इति वाच्यं तादृशविषयितावृत्त्यभावस्य किञ्चिद्धर्म्मावच्छिन्ननिरूपितत्वाभावत्वेन प्रवेशात् तावतापि लाघवस्यानपायात्॥ नचैवमप्यभावानामधिकरणभेदेन भेदपक्षे तत्तद्विषयितावृत्त्यभावमात्रस्यैव तादृशकूटान्तर्गततया तस्यैकत्र सत्त्वासम्भवादसम्भवइति वाच्यं तादृशविषयितावृत्त्यभावीयप्रतियोगिताकूटवत्त्वस्यैव संसर्गतया विवक्षितत्वात् कूटवत्ताच स्वनिरूपकाभाववत्त्वसम्बन्धेनेत्येषा दिगित्यप्यपास्तम् कूटत्वस्य तथाविधस्यासर्वज्ञदुर्ज्ञेयत्वात् वीप्सायाः सामान्याभावनिवेशे तात्पर्य्यग्राहकतया तदनुसारेणैवेहानुगमे सम्बन्धस्योक्तत्वेन कूटत्वघटितत्वादुक्तसम्बन्धस्यैव गुरुत्वाच्च ॥

लाघवादाह अथवेति अत्राप्यवच्छेदकत्वम्पूर्ववदेवानतिरिक्तवृत्तिस्वरूपमेवावसेयम् अत्रच द्वितीयसम्बन्धस्तादृशपरम्परावच्छेदकतावद्धर्म्मावच्छिन्नविषयितात्वनिरूपितस्वावच्छिन्नानिरूपितत्वव्याप्यत्वसम्बन्धावच्छिन्नसम्बन्धित्वं तादृशविषयितात्वनिरूपितस्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नव्यापकत्वम्वानुगम घटकोज्ञेयः ॥

बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नेऽतिप्रसङ्गादिति नच बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकव्यभिचारविशिष्टबाधत्वावच्छिन्नविषयित्वस्य बाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितत्वान्न दोष इति वाच्यं सर्वगगनवद्वाच्यत्वादित्यत्र बाधनिश्चयानामेकरूपेण प्रतिबन्धकतापक्षे तत्राव्याप्तिवारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वस्य प्रतिबन्धकत्वसामान्यावच्छेदकविषयित्वे विशेषणत्वस्य वाच्यत्वात् एवञ्च स्वविशिष्टविषयितावृत्त्यभावीयप्रतियोगितानिरूपितावच्छेदकतावद्धर्म्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमनुगमकोद्वितीयः सम्बन्धोबोध्यः स्ववैशिष्ट्यञ्च स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वस्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्ध-

कतात्वव्यापकाभावीयप्रतियोगितानिरूपितपरस्परावच्छेदकतावद्ध-र्मावच्छिन्नत्वोभयसम्बन्धेन नच प्रतिबन्धकताभेदपक्ष एवा-स्ति ज्यायानिति न तत्र दोष इति वाच्यम् उभयपक्षनिर्दुष्टलघुभूत-वक्ष्यमाणैतेनेत्यादिकल्पापेक्षयाऽस्य जघन्यत्वेन परित्याज्यभावस्यै-वोचितत्वात् ॥

अथ स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकता यावत्यः त-त्प्रत्येकं यद्धर्मावच्छिन्नानिरूपितकिञ्चिद्धर्मावच्छिन्नविषयित्वाव-च्छिन्नमर्थाद्यद्धर्मावच्छिन्नानिरूपितविषयित्वनिष्ठा या स्वाव-च्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नयत्धर्मत्वसमानाधिकरणावच्छेदक-ताभिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताव-च्छेदकता तन्निरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितवृत्तित्वादिनि-ष्ठावच्छेदकताकप्रतियोगिताकव्यापकतारूपाभाववत्तद्रूपावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकत्वन्निवेश्यं तथाच बाधविशि-ष्टव्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नव्यभिचारप्रतिबन्धकतायां बाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितव्यभिचारत्वावच्छिन्नवि-षयित्वावच्छिन्नत्वस्य तथाविधबाधप्रतिबन्धकतायां तथाविध बाधविषयित्वावच्छिन्नत्वस्य च सत्त्वेन यत्पदेन बाधविशिष्टव्य-भिचारत्वस्योपादेयतया तदवच्छिन्ने नातिव्याप्तिः एतदनुगमश्चोक्त-प्रायएवेति नोच्यत इति चेन्न एतेनकल्पापेक्षया गुरुत्वादेतस्य परि-त्याज्यताया एवोचितत्वात् यत्र स्थलविशेषे नास्ति व्यभिचारः पदार्थान्तरविशिष्टसाध्याभाववत्पक्षपदार्थान्तरविशिष्टहेत्वभाववत्प-क्षयोश्च ज्ञानन्नियमेनैकमेव तदपि सदैव व्यभिचारभ्रमात्मकं तत्र प्रागुक्तरीत्याऽतिव्याप्तिश्चेति ॥

विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र अत्रेशपीत्यादि घटत्वसमानाधिक-रणाभावीयविशेषगुणत्वतदितरोभयानवच्छिन्नप्रतियोगितानवच्छे-दकविशेषगुणत्वावच्छिन्नत्वस्य विशेषगुणत्वावच्छिन्ने व्यापक-त्वरूपत्वात घटत्वसमानाधिकरणाभावीयगुणत्वतदितरोभयानवच्छि-न्नप्रतियोगितानवच्छेदकगुणत्वावच्छिन्नत्वस्य च गुणत्वाव-च्छिन्ने घटत्वव्यापकत्वरूपत्वादुभयोर्भेदेन विशेषगुणवान्घट इति ज्ञाने संसर्गघटकतया विशेषगुणत्वावच्छिन्ने घटत्वव्यापकत्वाव-गाहिनि गुणत्वावच्छिन्ने न घटत्वव्यापकत्वावगाहित्वसम्भवः ॥

नच विशेषगुणत्वावच्छिन्नेपि घटत्वव्यापकतागुणत्वतदितरोभया- नवच्छिन्नप्रतियोगित्वघटितैवास्त्विति वाच्यं विशेषगुणप्रकारकबुद्धौ- रवोद्देश्यतावच्छेदकधर्म्मव्यापकताया गुणत्वतदितराभयानवच्छिन्नप्र- तियोगिताया भाने द्रव्यत्वावच्छेदेन विशेषगुणवत्वावगाहिनोज्ञानस्य- प्रमात्वापत्तेः घटत्वव्यापकता तथाविधा भासते द्रव्यत्वाव्यापकता- नेत्युक्तेर्विशेषकाभावेनासम्भवात् । अथवा विशेषत्वगुणत्वोभयत्वा- वच्छेदेन तादृप्रतियोगितावच्छेदकत्वपर्य्याप्त्यभाववद्विशेषगुणत्वा- वच्छिन्नत्वरूपविशेषगुणत्वावच्छिन्ननिष्ठव्यापकत्वावगाहिज्ञाने गु- णत्वगतैकत्वावच्छेदेन तादृशप्रतियोगितावच्छेदकत्वाभाववद्गुण- त्वावच्छिन्नत्वरूपस्य गुणत्वविशिष्टनिष्ठव्यापकत्वस्य न भानसम्भ- व उभयोर्भेदात् उक्तापत्त्या च गुणत्वगतैकत्वावच्छेदेन तादृशाभाव- घटितव्यापकत्वस्य विशेषगुणत्वावच्छिन्ने व्यापकत्वात्मकतया वक्तुमशक्यत्वादिति भावः ॥

नच द्वितीयकल्पस्य धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यत्र वा- धाव्याप्तिप्रसङ्गेन दूषितत्वात् तद्दोषस्येदानीमिष्टत्वात् विशेषगुणव- द्घटे च तत्स्थानीये स्वपदेन विशेषगुणवद्घटत्वस्य गुणवद्घट- त्वस्य च धारणासम्भवेन दोषासम्भवात् तत्कल्पस्य कोदोष इति वाच्यं मेयत्ववद्विशेषगुणाभाववद्घटपक्षकस्थले मेयत्वव- द्घटेऽव्याप्त्यापत्तेः तत्र विशेषगुणद्घटत्वस्य स्वपदेन ग्रहणसम्भवात् । वस्तुतोभावनान्योवायुवृत्तिवृत्तिस्पर्शावृत्तिधर्म्मसमवायी तदन्य- त्वे सति गुरुत्वात् जलद्रवत्वान्यत्वरूपस्य गुणनिष्ठविशेषत्वस्य स खण्डतया भेदवद्गुणवद्घटत्वस्य स्वपदेनोपादानसम्भवेन विशेष- गुणवद्घट एव तत्राव्याप्तिर्बोध्या ॥

विशेषगुणाभाववान्द्वितीयक्षणावच्छिन्नो घटोगुणसामान्याभाववानित्यादाविति दे- शकालादीनामुद्देश्यतावच्छेदकत्वे तदवच्छेद्यत्वस्य स्वरूपसम्बन्ध- रूपस्यैव भानाभ्युपगमेन व्यापकत्वाघटितस्यैव तत्र वाधाश्रयासि- द्धिरूपत्वादव्याप्तिसम्भव इति भावः ।

ननु गुणसामान्याभाववान्घटो विशेषगुणाभाववानित्यत्र घट- त्वसामानाधिकरण्येन गुणवद्घटरूपाश्रयासिद्धिघटिते वाधेऽव्याप्ति- सम्भव ईदृक्स्थलानुधावनमनुचितमिति चेन्न सामानाधिकरण्येन वाधघटितवाधाव्याप्तिवारणाय प्रागुक्तेनोभयसम्बन्धावच्छिन्नप्रतियो-

गिताकाभावेनात्रापि धारणसम्भवात् द्वितीयक्षणावच्छिन्नघटघटि- ताश्रयासिद्धिनिर्णयप्रतिबध्यतायास्सामानाधिकरण्येन बुद्धित्वानव- च्छिन्नत्वात् प्रतिबध्यीभूतज्ञानेपि सम्बन्धांशे कालरूपोद्देश्यतावच्छे- दकावच्छेद्यत्वस्य भानात् तद्घटितोक्तसम्बन्धस्या श्रयासिद्धित्वव्य- धिकरणत्वेन तत्र दोषसम्भवात् व्यापकत्वानवच्छेद्यसंसर्गताकबु- द्धित्वस्यैव सामानाधिकरण्येन बुधित्वरूपत्वे च बाधनिर्णयप्रतिबध्य- ताया अपि तादृशबुद्धित्वावच्छिन्नतया दोषसम्भवात् कालातिरिक्त- पक्षतावच्छेदकसाध्ययोः प्रागुक्तस्थलतुल्यतयैव तत्स्थलस्यैव प्रथमं- बुद्धावारूढतयोक्तत्वादित्यपि केचित्॥ गुणाभावादनिमव्याप्यवृत्ति- त्वेन कपिसंयोगसाध्यकवृक्षपक्षकस्थले कपिसंयोगाभाववद्वृक्षस्येव गुणवद्घटस्यापि बाधत्वविरहात् कालिकाव्याप्यवृत्तिसाध्यके काल विशेषस्य पक्षतावच्छेदकतया बाधसम्पत्त्यर्थमनुसरणमित्यपरे त च्चिन्त्यं तथासति विशेषणगुणाभाववान्घटोगुणसामान्याभाववानित्ये- तत्स्थलपरित्यागबीजत्वेनैतस्याप्युद्भावनीयतयोपेक्षाया निर्बीजत्वाप- त्तेः बाधस्थले हेतोरपक्षधर्मत्वानैकान्तिकत्वान्यतरप्रवादं व्याप्यवृ- त्तिसाध्यकस्थलीयाभिप्रायकतया समर्थ्य कपिसंयोगाभाववद्वृक्षस्य बाधताया मथुरानाथेनोपपादिततया दृष्टान्तवैषम्याच्चेतिध्येयम् ॥

अत्रेदश्चिन्त्यते कालविशेषस्य यत्रोद्देश्यतावच्छेदकघटकता त त्रोद्देश्यतावच्छेदकमात्रावच्छिन्नत्वं स्वरूपसम्बन्धरूपमेव किम्वा कालविशेषावच्छिन्नत्वमेव तथा नाद्यः घटमात्रस्यैव द्वितीयक्षणाव- च्छिन्नतया तादृशे यत्किञ्चिद्घटे गुणसामान्याभावावगाहिनोगुण- वत्वावगाहिनश्च ग्रहस्यापि सम्भवेन तयोरपि परस्परं प्रतिबन्धक- त्वापत्तेः । तद्वृत्तिप्रतिबन्धकत्वस्यावच्छेदकावच्छेदेन व्यापकत्वा- वगाहिज्ञानाभ्युपगमस्विना वक्तुमशक्यत्वात् नच यत्किञ्चिद्घटा वगाहि तादृशज्ञानन्नोत्पद्यत एव उत्पद्यमानमपि वा तथावि धविरोधिज्ञानमपि प्रतिबध्नात्येवेति वाच्यम् अनुभवविरोधात् अ- न्यथा घटत्वमात्रधर्मिताबच्छेदकस्थलेप्येतस्य सम्भवेन पूर्व्वस्थल परित्यागे बीजाभावात् अतएव द्वितीयक्षणावच्छिन्नो घटो नीलह- त्यस्यावच्छेदकावच्छेद्यत्वावगाहिनो भ्रमत्वं सामानाधिकरण्यमात्रा वगाहिनः प्रमात्वमप्यानुभविकमनाकुलमवतिष्ठते । द्वितीयं त्वङ्गीकु- र्म्मः तत्रचावच्छेदकावच्छेदेन बुद्धिस्थले संसर्गघटकतया द्वितीयक्ष

णावच्छिन्नघटत्वव्यापकत्वमात्रं शुद्धघटत्वव्यापकत्वसहितस्वरूपसम्बन्धरूपद्वितीयक्षणावच्छिन्नत्वं द्वितीयक्षणावच्छिन्नघटत्वव्यापकत्वसहितस्वरूपसम्बन्धरूपद्वितीयक्षणावच्छिन्नत्वम्वा भासत इति यथानुभवमास्थीयतां सामानाधिकरण्येन बुद्धिस्थलेच विधेये संसर्गघटकतया स्वतोवा कालमात्ररूपोद्देश्यतावच्छेदकावच्छेद्यत्वं स्वरूप, सम्बन्धरूपमेव भासत एवेदमेव च कालोद्देश्यतावच्छेदकस्थलस्य तदितरस्थलात्सर्वथावैलक्षण्यं एवञ्चैतत्स्थलेपि नाव्याप्तिसम्भवः विशेषगुणाभाववद्द्वितीयक्षणावच्छिन्नघटत्वावच्छेदनापि गुणसामान्याभावावगाहिबुद्धेर्द्वितीयक्षणावच्छिन्नघटत्वसामानाधिकरण्यमात्रावगाहितया तादृशघटत्वावच्छेदेन गुणवद्धटस्यैव बाधरूपताया वक्तव्यत्वात् यदि तद्घटानुयोगिकसम्बन्ध एव कालस्योद्देश्यतावच्छेदकताघटसम्बन्धोवाच्यः तत्र सामानाधिकरण्येन गुणवद्घटस्य बाधरूपतया तत्र दोषसम्भव इत्युच्यते तदा विशेषगुणाभाववालयं गुणसामान्याभाववानित्यत्रैवाव्याप्तिरुद्भावयितुमुचितेति कालविशेषस्य पक्षतावच्छेदकतयानुसरणं सामानाधिकरण्येन बाधमात्रसम्पादनफलकमित्युक्तस्थलेप्यस्त्येव तात्पर्यं तदनुक्तिश्च समयविशेषाहितदोषप्रतिभावैचित्र्यादितितु गृह्णीमः।

एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नेति। अत्र द्वितीयावच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे सर्वत्रासम्भवः एकदेशविषयितायाप्रतिबन्धकतावच्छेदकविषयितात्वस्य सत्वेन तत्र बाधत्वाद्यवच्छिन्न निरूपितत्वविरहात् अतोनातिरिक्तवृत्तित्वरूपमेव तद्वाच्यम्॥ यत्तु यद्रूपावच्छिन्नविषयित्वसामान्ये तादृशप्रतिबन्धकतावच्छेदकत्वं तद्रूपावच्छिन्ननिरूपितत्वमेव प्रतिबन्धकतावच्छेदकत्वं तथासति नासम्भवः एवञ्च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्ननिरूपितत्वस्य निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकजलवद्ध्रदत्वावच्छिन्नविषयित्वे विरहेण तादृशविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वस्य तादृशह्रदत्वे विरहात्तदवच्छिन्नेऽतिप्रसङ्गविरहात् विशिष्टद्वयाघटितत्वमपि न निवेशनीयमिति तत्तुच्छम् हेतुमत्पक्षघटितासाधारण्ये सत्प्रतिपक्षे च हेतुमत्पक्षतावच्छेदकावच्छिन्नविषयत्वमादायाव्याप्त्यापत्तेः असाधारण्यसत्प्रतिपक्षविषयितासाधारणासाधारण्यघटकविषयिताभिन्नत्वसत्प्रतिपक्षघटकविष-

यिताभिन्नत्वयोर्निवेशापेक्षया अन्नानतिरिक्तवृत्तित्वस्य विशिष्टद्वयाघटितत्वस्य च निवेशस्यैव लाघवेन युक्तत्वात्॥ यद्यपि विशिष्टद्वयाघटितत्वनिवेशेपि सत्प्रतिपक्षासाधारण्यघटकविषयिताभिन्नत्वनिवेश आवश्यकः तथापि सत्प्रतिपक्षासाधारण्यविषयितासाधारणतन्निवेशस्य न तत्राप्यावश्यकताऽत्रच तदेव तयोरव्याप्तिवारणाय निवेश्यं तच्चासाधारण्यविषयिताव्यापिका यद्रूपावच्छिन्ननिरूपितविषयितासाधारण्यविषयिताभिन्नतद्रूपावच्छिन्ननिरूपितविषयिताभिन्नत्वमेवमेव सत्प्रतिपक्षघटकविषयिताभिन्नत्वमपि वक्तव्यम्भवतिचैवं सत्प्रतिपक्षत्वासाधारण्यत्वयोर्द्विधाप्रवेश इति गौरवम्।

किञ्च शब्दानुगमपक्षीयताया इदानींतनलक्षणानां व्यवस्थापितत्वात्तत्पक्षे वा नैतस्य प्रकारस्य सम्भवः तथाहि यत्रासाधारण्यसत्प्रतिपक्षयोरप्रसिद्धिस्तत्रासाधारण्यसत्प्रतिपक्षघटकविषयित्वाप्रसिद्ध्या तद्घटितनिरुक्तविशिष्टभेदाप्रसिद्ध्या तत्रत्यदोषेष्वव्याप्तिः विशिष्टद्वयविषयताविशेषणभेदस्यैव भ्रमप्रमासाधारणविषयिताया बाधबुद्धिजनकतावच्छेदकविषयित्वादिना भेदस्य तेनैव रूपेण व्याव्यतया च तादृशविषयित्वप्रवेशेपि साध्याभावव्याप्यप्रतिहेतुविषयित्वस्य सत्प्रतिपक्षज्ञानीयस्य जनकतावच्छेदकतया तादृशविशिष्टभेदवत्त्वात् तस्य सत्प्रतिपक्षनिरूपितत्वविरहात्सत्प्रतिपक्षेऽव्याप्तिः एवं ह्रदोवह्निमाञ्जलादित्यत्रासाधारण्यघटकविषयताभिन्नजलवद्ध्रदत्वावच्छिन्नविषयत्वप्रसादायाव्याप्तिः। अथ प्रकृतसाध्यव्यापकीभूताभावप्रतियोगित्वविषयतां निरूप्यनिरूपकभावापन्नविषयतात्वेन निवेश्य तन्निरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविषयत्वतन्निरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षवृत्तित्वविषयत्वद्वयव्यापिका यद्रूपावच्छिन्नविषयता भ्रमप्रमासाधारणानिरूप्यनिरूपकभावापन्नासाधारण्यविषयिताभिन्ना तद्रूपावच्छिन्नविषयिताभिन्नत्वन्निवेश्यम् एवमेवच सत्प्रतिपक्षघटकविषयिताभिन्नत्वंनिर्वक्तव्यं, तथाच नोक्तदोषाणामवकाश इतिचेन्न ह्रदोजलवद्ध्रदकालीनवह्निमान् पङ्कजादित्यत्र जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तेः जलवद्ध्रदत्वावच्छिन्नविषयताया उक्तभेदवत्त्वविरहात्। तादृशप्रतियोगिजलत्वावच्छिन्नवि-

षयितायाश्च तथाविधविशिष्टनिरूपितत्वात् उक्तयुक्त्या तादृशवह्न्य-भावघज्जलवत्यतिव्याप्तिश्च यदि चाभाववद्घटत्वावच्छिन्नविषयितामादाय गगनाभाववदभाववत्कालीनघटेऽव्याप्तिवारणाय त्वयापि प्राक्परिष्कृतविशिष्टद्वयविषयताशून्यज्ञानीयत्वं यद्रूपावच्छिन्नविषयत्वे निवेश्य तद्वारकप्रकारान्तरनिराकरणरीतेर्यथाश्रुतविशिष्टान्तराघटितत्वपरिष्कारावसरे दर्शितत्वात् तथाचास्माभिरपि तदेव निवेश्यमिति नोक्तदोषसम्भव इतिविभाव्यते ।

तदाप्येकरूपेण प्रतिबन्धकत्वपक्षे शैवालवद्ह्रदत्वावच्छिन्नविषयित्वसामान्यस्य तादृशप्रतिबन्धकतावच्छेदकत्वादुक्तभेदवत्त्वाच्च तद्रूपावच्छिन्नविषयित्वस्य तादृशविषयितात्वाधिकरणतया तत्राऽसाधारण्यनिरूपितत्वविरहात्तत्राव्याप्तिर्दुर्वारा । अतएव प्रकृतहेतुमत्पक्षतावच्छेदकावच्छिन्नविषयिताभिन्नत्वसत्प्रतिपक्षविषयिताभिन्न-प्रकृतसाध्याभावव्याप्यप्रतिहेतुविषयिताभिन्नत्वतादृशप्रतिहेतुमत्पक्षविषयिताभिन्नत्वादिकमेव निवेश्यं नतूक्तरीत्याऽसाधारण्यादिविषयताभिन्नत्वमपीत्यतिलाघवमिति निरस्तम् प्रतिहेतोरनन्ततया तद्घटितविशिष्टविषयिताभेदकूटनिवेशोऽतिगौरवात्तदनुगमस्य दुरशक्यत्वाच्च ॥

किञ्चाभाववत्तादृशघटादावतिव्याप्तिः तत्तन्निश्चयानां विशिष्टनिश्चयत्वेन प्रतिबन्धकत्वपक्षे दुर्वारा गगनाभाववदभाववत्त्वावच्छिन्नविषयित्वसामान्यस्य प्रतिबन्धकतानवच्छेदकत्वात् विशिष्टद्वयविषयताशून्यज्ञानीयगगनाभाववत्तादृशघटत्वावच्छिन्नविषयितायाः तादृशविशिष्टनिरूपितत्वादिति तद्वारणप्रकारान्तरस्य लघुभूतस्य विरहेण त्वयापि विशिष्टद्वयविषयताशून्यत्वन्निवेशनीयमेवेति लाघवादनतिरिक्तवृत्तित्वमेव वक्तव्यम् यदि च सर्व्वं गगनवद्वाच्यत्वादित्यादौ वाध्यनिश्चयानामेकरूपेण प्रतिबन्धकत्वे ह्रदोवह्न्यभाववान् ह्रदे वह्न्यभाव इत्यनयोरेकरूपेण प्रतिबन्धकत्वे च तादृशयत्किञ्चित्प्रतिबन्धकतावच्छेदकवाध्यान्तरविषयतामादाय लक्षणासम्भववारणाय यत्किञ्चित्प्रतिबन्धकतावच्छेदकाविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वान्निवेश्यं तथाचाभाववत्तादृशघटे नातिव्याप्तिः तादृशप्रतिबन्धकतावच्छेदकस्याभाववत्तादृशघटत्वावच्छिन्नविषयित्वस्य विशिष्टद्वयविषयताशून्यज्ञानीयत्वविरहात् गगनाभा

ववत्तादृशघटत्वावच्छिन्नविषयित्वस्य तादृशाव्यापकाविषयिताशून्यज्ञानीयत्वविरहात् । तादृशयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयित्वाप्रसिद्धेरित्युच्यते तदाप्येतत्पक्षस्य प्रागुदूषितत्वेन दोषस्यैवाभावेन तन्निवेशस्य नास्त्येव प्रयोजनम् जातिमत्पक्षकवह्निसाध्यके वह्न्यभाववज्जातिमत्त्वव्याप्तिवारणाय यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमेव निवेशनीयं तथाच तत्रतत्रोक्तदोषे धर्मविशेषावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वघटिततादृशविषयितात्वव्यापकतारूपविशेषाभावमादाय लक्षणसमन्वयस्यैव गगनाभाववत्तादृशघटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वघटिततादृशविषयितात्वव्यापकतात्मकविशेषाभावमादायातिव्याप्तेरप्यस्त्येव सम्भवः ।

एतेन प्रतिबन्धकताघटितलक्षणपरमसिद्धान्तस्यैतत्कल्पस्यैकरूपेण प्रतिबन्धकत्वतदभावोभयपक्षनिर्दोषत्वमेवोचितमित्यपरितोषवन्तोपि निराकृताः नच स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्यापि निर्दोषतायाः प्रागुक्तत्वेन तदेव लाघवादेव निवेश्यं तथासत्येकरूपेण प्रतिबन्धकत्वाभावेपि नक्षतिः एवञ्च विशिष्टद्वयाघटितत्वञ्च निवेश्यमिति वाच्यम् एवंसति स्वावच्छिन्नविषयित्वावच्छिन्नत्वदलस्य व्यर्थत्वापत्त्यैतस्य लक्षणान्तरत्वापत्तेः तथाहि बाधादिनिर्णयप्रतिबन्धकतानतिरिक्तवृत्तिबाधविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकवह्नित्वाद्यवच्छिन्नत्वमादाय वह्न्याद्येकदेशातिव्याप्तिवारणाय तन्निवेशितं न च स्वातिरिक्तधर्मानवच्छिन्नस्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यत्वविवक्षणान्न तत्रातिव्याप्तिरिति वाच्यं बाधादिनिर्णयप्रतिबन्धकतावच्छेदकविषयितात्वस्य मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयितायां सत्त्वेन तत्र वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्ननिरूप्यताया विवक्षिताया विरहादसम्भवापत्तेः तदिदमेकदेशातिव्याप्तिवारणं तद्दलप्रवेशफलमुक्तविधाव्यापकविषयताशून्यत्वनिवेशेन सम्भवति वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयितायां वह्नित्वाद्यवच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वविरहात् तस्मादेकरूपेण प्रतिबन्धकत्वाभावपक्षीयमव्यापकविषयताशून्यत्वाघटितमुभयपक्षीयम्वा किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वघटितमेवेदं लक्षणमित्यकामेनापि वा-

त्वं तथासत्यभाववत्त्वादृशघटेऽतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वं प्रथमदलेपि निवेश्यमेवेति हेतुमत्पक्षतावच्छेदकावच्छिन्नविषयत्वादिकमादायासाधारण्यसत्प्रतिपक्षाव्याप्तिवारणाय द्वितीयदलेपि विवक्षणीयमेवानतिरिक्तवृत्तित्वम् ॥

यत्तु द्वितीयदिशि स्वरूपसम्बन्धरूपावच्छेदकत्वमेवास्माकमभिमतं तत्र स्वावच्छिन्नविषयित्वाव्यापकाविषयिताशून्यज्ञानीयत्वनिवेशेपि पाषाणमयत्ववत्पर्वताभाववद्भ्रदादावतिव्याप्तिवारणाय प्रतिबन्धकताविशेषणमवच्छिन्नत्वान्तमनतिरिक्तवृत्तित्वघटितमुपादेयमेव वह्न्यभाववत्पाषाणमयत्ववह्न्यभाववदभाववत्त्वादेरप्रसिद्धितयाऽव्यापकविषयताशून्यज्ञानीयत्वविरहेण च तदवच्छिन्नविषयित्वमादाय वारणासम्भवादिति तत्तुच्छम् तथासति द्वितीयावच्छेदकत्वस्य लक्षणप्रविष्टत्वेन तस्यैवानतिरिक्तवृत्तित्वरूपतामात्रविवक्षया सर्वदोषवारणसम्भवे प्रतिबन्धकताविशेषणतयाऽवच्छिन्नत्वान्तं निवेश्य तद्घटकावच्छेदकत्वस्यानतिरिक्तवृत्तिरूपतानुधावनस्य परमविवेचकभट्टाचार्यपरिशीलितत्वमयुक्तमित्थमाशङ्कायास्त्वया दुर्निवार्यत्वात् नचैवमाशङ्कास्मत्पक्षे समुन्मिषति अव्यापकविषयताशून्यत्वस्य प्रकृतलक्षणानिविष्टत्वात् तन्निवेश्यसम्पादितदोषविरहस्य प्रतिबन्धकताविशेषणावच्छिन्नत्वान्तविकलतया लघुभूतस्य च लक्षणस्य लक्षणान्तरत्वादेकेनापरस्यान्यथाकर्त्तुमशक्यत्वात् दोषवारणायोपरिष्टात्तस्य निवेशनीयत्वेपि तादृशावच्छिन्नत्वघटितलक्षणदोषसम्पादिततया उपजीव्यविरोधपरिहारमुखेन तथाविधलक्षणशरीराक्षतिसम्पादककिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वाकारणैव हि तन्निवेशनीयतामावहति

किञ्च भवदभिमतनिवेश्यभावाव्यापकाविषयिताशून्यत्वनिवेशनमेकरूपेण प्रतिबन्धकत्वपक्ष एव सम्भवदुक्तिकं तत्रासाधारण्ये शैवालवद्भ्रदत्वाद्यवच्छिन्नविषयितामादाय विशिष्टेजलात्मके प्रागुक्ताया अव्याप्तेः तन्निवेशे वारणसम्भवेपि ह्रदश्शैवालवद्भ्रदकालीनवह्निमाञ्जलादित्यत्रासाधारण्ये तादृशवह्न्यभावव्याप्यजलवद्भ्रदरूपसत्प्रतिपक्षे चाव्याप्त्यापत्तिर्दुर्वारा तद्वारणाय च प्रागुक्तव्यापकत्वघटितासाधारण्यघटकविषयताभिन्नत्वादिकमेव निवेश्यं तथाचैतादृशभेदनिवेशैकदाविशिष्टद्वयाघटितत्वनिवेशस्वावच्छिन्नविषयित्वा-

व्यापकविषयताशून्यत्वप्रवेशगौरववद्रूपबाधाव्याप्तिवारकावच्छेदक-त्वनिष्ठव्यापकताघटकसम्बन्धविशेषप्रवेशापेक्षया लाघवात् प्रतिबन्ध-कतैक्यतदभावोभयपक्षेपि प्रतिबन्धकतानुपयुक्ततया भासमानाभाव-विशेषणगगनघटितगगनाभाववत्ताद्दशघटस्य मेयत्वविशिष्टबाधादितु-ल्यस्य दोषतामनभ्युपेत्यासाधारण्याद्यव्याप्तिवारणाय द्वितीयावच्छे-दकत्वमनतिरिक्तवृत्तित्वरूपं विशिष्टद्वयाघटितत्वाघटितं तदाश्रय-विषयित्वञ्च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्ववि-शेषितं वह्न्याद्येकदेशातिव्याप्तिवारणाय विवक्षितमवच्छिन्नत्वान्तञ्चा-भाववत्ताद्दशघटेऽतिव्याप्तिवारणाय विशिष्टद्वयविषयताशून्यत्वघटि-तेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वाद्यवच्छिन्ननिरूपितयत्कि-ञ्चित्प्रतिबन्धकतावच्छेदकताद्दशविषयित्वमादाय जलवद्ध्रदेऽतिव्या-प्तिवारणाय विवक्षणीयेनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वेन घटित-त्वक्तव्यम् ।

एतेन अवच्छिन्नान्तपदोपादानगृहीतस्वरूपसम्बन्धरूपावच्छे-दकत्वतात्पर्यवदवच्छेदकपदार्थस्यानतिरिक्तवृत्तित्वरूपतायावक्तु-मशक्यतया अनतिरिक्तवृत्तित्वस्यावच्छेदकत्वपदार्थत्वेपि तद्रूप-द्वितीयावच्छेदकत्वघटितस्य लक्षणान्तरता भवत्येव प्रकृतलक्षणवा-क्येनावोध्यत्वात् अन्यथा सिद्धान्तव्याप्तेः प्रतियोगिवैयधिकरण्यघटि-ताया निरवच्छिन्नवृत्तित्वघटिते लक्षणे लक्षणान्तरता न स्यान्निरुक्त-वृत्तित्वस्य लक्षणघटकहेतुसामानाधिकरण्यपरिष्कारात्मकताया व-क्तुमशक्यतया लक्षणवहिर्भूतविशेषणत्वाभावप्रसक्तेरित्युक्तावपि नक्ष-तिः एवं द्वितीयावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपत्वे स्वावच्छिन्न-विषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य तदाश्रयविषयिताविशेष-णत्वे च प्रथमावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं न वक्तव्यमित्याशङ्का-निराकृता तथासत्यवच्छिन्नत्वान्तदलस्य व्यर्थत्वापत्त्या तद्घटकाव-च्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वानतिरिक्तवृत्तित्वरूपत्वयोः परीक्ष-णस्य वायलदशनपरीक्षणसपक्षत्वात् तस्मादुभयत्रवच्छेदकत्वमन-तिरिक्तवृत्तित्वरूपमेव सिद्धमित्यलमधिकावेशेन ॥

येतु घटाद्युदासीनविषयकं ज्ञानं यत्र बाधादिविषयकं तज्ज्ञानमपि नियमतोघटादिविषयकं तत्र द्वितीयावच्छेदकत्वस्यानतिरिक्तवृत्ति-त्वरूपत्वेऽव्याप्तिः स्यादिति तदवच्छेदकत्वं स्वरूपसम्बन्धरूपमेव वा-

ऽयं तथासति पाषाणमयत्ववत्पर्वतादावतिव्याप्तिवारणायानतिरिक्तवृ-त्तित्वरूपावच्छेदकत्वघटितमवच्छिन्नत्वान्तमुपादेयम्भवतीति द्विती-यावच्छेदकतायाः स्वरूपसम्बन्धरूपता प्रथमायास्त्वनतिरिक्तवृत्ति-त्वरूपतैवेति वदन्ति ते च निष्कारणस्थलविशेषकल्पनया स्वरूप-सम्बन्धरूपावच्छेदकत्वपक्षे प्रदर्शितगौरवानाकलनेन च प्रदर्शितसू-क्ष्ममार्गासञ्चरणकौशला वेदितव्याः ।

यद्यपि द्वितीयावच्छेदकत्वस्य प्रकृतलक्षणघटकतया तस्यैव स्वरूपसम्बन्धरूपानतिरिक्तवृत्तित्वरूपोभयत्वोपगमे सम्भाविता-व्याप्तेः स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वस्य भवदभिमत-त्वेन तेन वह्न्याद्येकदेशातिव्याप्तेश्च वारणसम्भवादवच्छिन्नत्वान्तो-पादानवैफल्यमस्त्येव नचात्र किलाधवमितिवाच्यम् । अनतिरिक्तवृ-त्तित्वघटितावच्छिन्नत्वस्य प्रतिबन्धकताविशेषणतयोपादाने वह्न्याद्ये-कदेशविषयितामादायासम्भववारणाय द्वितीयावच्छेदकत्वस्य विष-यित्वसामान्ये विवक्षणीयतया व्यापकत्वस्यैकस्याधिक्यादस्मत्पक्षे तत्प्रतिबन्धकतानतिरिक्तवृत्तित्वरूपावच्छेदकत्ववत्येव तन्निरूपितस्व-रूपसम्बन्धरूपतावच्छेदकत्वस्य विवक्षितत्वादिति दोषो न सम्भवति-एतेनेत्यादिनैतत्परिहारस्योक्तप्रायत्वात् इदानीं किञ्चिद्रूपावच्छिन्नविष-यित्वाव्यापकविषयताशून्यत्वस्याप्युक्तौ क्षत्यभावात् त्वयेव मयाप्यभा ववद्वृत्तातिव्याप्तिवारणप्रकारस्यानुसरणीयत्वात् तत्र गौरवस्य स्वरू-पसम्बन्धरूपावच्छेदकत्वस्यावर्जनीयत्वेऽदोषत्वादित्येकदेशातिव्या-प्तिवारकतयाऽवच्छिन्नान्तस्य सार्थकत्वाच्च तथापि यत्र मेयत्ववि-शिष्टव्यभिचारविषयकं ज्ञानं नियमतो मेयत्वविशिष्टव्यभिचारघटित-साध्याभावादिव्यावर्त्तकधर्मदर्शनात्मकमेव तत्र मेयत्वविशिष्टव्यभि-चारविषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकमे-यत्वविशिष्टव्यभिचारघटितव्यावर्त्तकधर्मवत्पक्षविषयित्वसामान्य-मादायातिव्याप्तिवारणाय प्रथमाद्दिश्येव स्वरूपसम्बन्धरूपावच्छेदक-त्वस्वाच्यं तथाच मेयत्वविशिष्टव्यभिचारविषयित्वसामान्यावच्छि-न्नत्वस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वे विरहान्न दोषः

यद्वा मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानं नियमतो बाधविषयकं बाधज्ञानमपि तादृशव्यभिचारकालीनसाध्याभाववत्पक्षविषयकं कदाचित्तादृशव्यभिचारसम्बन्धान्तरविशिष्टसाध्याभाववत्पक्षविष-

यकञ्चदाचिज्जायते नतु केवलसाध्याभाववत्पक्षविषयकं तत्र मे-यत्वविशिष्टव्यभिचारविषयितानतिरिक्तवृत्तिकप्रतिबन्धकतावच्छेदक-त्ववद्बाधविषयित्वमात्रे तादृशव्यभिचारत्वावच्छिन्ननिरूपितत्वस्य सत्त्वात् प्रथमावच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे च बाधप्रतिबन्ध-कतायां तादृशव्यभिचारविषयित्वसामान्यावच्छिन्नत्वविरहान्न दोषः एवञ्च प्रागुक्तदोषसम्भावनया द्वितीयस्य स्वरूपसम्बन्धरूपता एतद्दो-षसम्भावनया प्रथमस्य वेत्यत्र विनिगमनाविरहादेकस्यापि न तत्सि-द्धिः स्यादुभयत्रैवावच्छेदकत्वस्योभयरूपता वा स्यादितिध्येयम् ।

नचासाधारण्ये कागतिः तद्विषयिताया अप्रतिबन्धकज्ञानसा-धारणत्वादितिवाच्यम् । उभयत्रैव निरूप्यनिरूपकभावापन्न-विषयतात्वेन भ्रमप्रमासाधारणासाधारण्यविषयतां निवेश्य तच्छून्यत्वप्रकृतानुमित्यप्रतिबन्धकत्वोभयाभावस्यैव निवेश्यत्वात् यद्यपीदम्भूयः प्रदर्शितम्, तथापि निवेशरीतिविशेषप्रदर्शनाये-हाप्युक्तम् तथाहि स्वावच्छिन्नविषयताशालितादृशनिश्चयवृ-त्तिभेदप्रतियोगितावच्छेदकत्वाभाववदभावीया याऽसाधारण्यविषय-त्वाभावत्वावच्छिन्नोभयत्वावच्छिन्नप्रतियोगिता तन्निरूपिताभावत्व-निष्ठावच्छेदकतानिरूपिता या प्रकृतानुमितिप्रतिबन्धकतात्वस-मानाधिकरणोभयावृत्तिधर्म्मावच्छिन्ना अथवा धर्म्मत्वसमाना-धिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नप्रकारत्वनिष्ठा-वच्छेदकताभिन्नत्वे सति प्रकारत्वनिष्ठावच्छेदकताभिन्नत्वे सति वा तादृशविशेष्यत्वनिष्ठावच्छेदकताभिन्नत्वे सति विशेष्यत्वनि-ष्ठावच्छेदकताभिन्नत्वे सति वा निश्चयत्वनिष्ठावच्छिन्नत्वसम्बन्धाव-च्छिन्नावच्छेदकताभिन्नप्रतिबन्धकतात्वनिष्ठावच्छेदकताभिन्नावच्छे-दकत्वानिरूपिता या प्रतियोगिता तत्सम्बन्धावच्छिन्नप्रतिबन्धकत्व-निष्ठावच्छेदकता तदवच्छिन्ना तन्निरूपितावच्छेदकतावदुभयावृत्ति-धर्म्मावच्छिन्ना तदवच्छेदकतापर्य्याप्त्यधिकरणधर्म्मपर्य्याप्तावच्छेद-कतानिरूपिता वा या प्रतियोगिता तत्सम्बन्धावच्छिन्नावच्छेदतानि-रूपिताभावत्वनिष्ठावच्छेदकतानिरूपितोभयत्वनिष्ठावच्छेदकतानिरू-पितासाधारण्याभावत्वावच्छिन्नप्रतियोगितानिरूपकाभाववृत्तिव्याप-कतारूपाभावीयप्रतियोगितानिरूपितपररूपरीयत्किञ्चिद्रूपावच्छिन्न-विषयित्वाव्यापकविषयिताशून्यत्वनिष्ठावच्छेदकतानिरूपितनिश्चय-

निष्ठावच्छेदकता तन्निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्ननिरूपितविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धोयोऽभावः तद्वत्त्वावच्छिन्ननिरूप्यताकत्वस्वतादात्म्योभयसम्बन्धेन वस्तुविशिष्टवत्त्ववच्छिन्नत्वं समुदायार्थः अत्र प्रतिबन्धकभेदेऽप्येकधर्मावच्छिन्नप्रतिबन्धकताया अभिन्नत्व उभयावृत्तिधर्मावच्छिन्नेति तदपीतरवारकरूपमेव बोध्यं तेन तज्ज्ञानवृत्तित्वविशिष्टतत्प्रतिबन्धकत्वाभावमादायासाधारण्यभिन्नेषु न लक्षणासम्भवः प्रतिबन्धकभेदेन प्रतिबन्धकताभेदे चाथवेत्याद्यनुसरणीयं तत्रापि साक्षात्परम्परासाधरणावच्छेदकत्वपक्षे प्रथमसत्यन्तपक्षः साक्षादेवावच्छेदकत्वे द्वितीयसत्यन्तपक्षः तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वाद्यभावमादायासाधारण्यभिन्नेषु असंभववारणायावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वप्रवेशः उक्तप्रतिबन्धकत्वनिष्ठावच्छेदकत्वस्य द्वितीयोभयाभावप्रतियोग्यभावप्रतियोगिप्रतिबन्धकत्वविशेषणत्वे तदवच्छिन्नत्वेन प्रतिबन्धकत्वनिष्ठावच्छेदकत्वप्रवेशः उपलक्षणत्वे प्रतिबन्धकत्वभेदाभेदपक्षानुसारात्स्वावच्छेदकतेत्यादिकल्पद्वयमुक्तम् एकरूपेण प्रतिबन्धकत्वतदभावोभयपक्षानिर्दोषत्वसम्पत्तिफलककिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य तादृशविषयितात्वव्यापकतारूपाभावीयप्रतियोगितावच्छेदकोटौ प्रवेशात् विशेषाभावात्मकतादृशाभावमादाय सर्वगगनवदित्यादौ बाधे लक्षणसङ्गतिः तन्निवेशरीतिर्ज्जगदीशकृतावच्छेदकत्वलक्षणदीधितिव्याख्याविवरणे विस्तरेणास्माभिर्दर्शितेति नेहोच्यते।

लाघवादाह अथवेति अत्रापि द्वितीयावच्छेदकता पाषाणमयत्ववत्पर्वतादौ तादृशपर्वतत्वाद्यवच्छिन्नानिरूपितस्य विषयित्वस्य वह्न्याभाववत्पाषाणमयत्ववदादेरप्रसिद्ध्याऽप्रसिद्धत्वेन प्रसिद्धस्य प्रतिबन्धकतातिरिक्तवृत्तित्वेन प्रतिबन्धकतानतिरिक्तवृत्तेर्विशिष्टविषयित्वस्य तादृशधर्मावच्छिन्नानिरूपितत्वविरहेण स्वावच्छिन्नानिरूपितविषयित्वानवच्छिन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकधावच्छिन्ननिरूपितविषयितासामान्यकधर्मावच्छिन्नेऽतिप्रसङ्गवा-

रणायानतिरिक्तवृत्तित्वरूपैव वाच्यः प्रथमापि सत्प्रतिपक्षासाधारणाद्यव्याप्तिवारणाय पूर्ववदेव तथाविधा सर्वंगगनवद्वाच्यत्वादित्यत्र बाधाव्याप्तिवारणाय बाधविपरीतबाधाद्योरेकरूपेण प्रतिबन्धत्वेऽसम्भववारणाय वा स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेश्यं न चान्यथा अधिकस्प्राग्वदनुसन्धेयम् ।

प्रतिबन्धकत्वाघटितवक्ष्यमाणकल्पसाधारणविशिष्टान्तराघटितत्वप्रकाररूपैरङ्गीकृतन्दूषयितुमुपन्यस्यति अत्रकेचिदिति

हेत्वाभासविभाजकरूपेणेति । यथाश्रुताभिप्रायेणेदं वस्तुतो हेत्वाभासविभाजकतावच्छेदकरूपेण बोध्यम् तेषां हेत्वाभासविभाजकतावच्छेदकरूपत्वेन प्रवेशे हेत्वाभासत्वप्रवेशेनात्माश्रयापत्त्या बाधत्वत्वादिविशेषस्वरूपेण प्रवेशं सूचयितुं तच्च रूपं बाधत्वव्यभिचारत्वादीत्युक्तम् । बाधत्वत्वव्यभिचारत्वत्वादीति तदर्थः धूमाभाववद्वृत्तिवह्नित्ववह्निमन्निष्ठधूमाभावत्वादिसाधारणस्वसजातीयविशिष्टान्तरतावच्छेदकरूपप्रसिद्धौ तच्च सर्वमनुगतस्वाच्यं तत्र व्यभिचारत्वत्वञ्च साध्यासामानाधिकरण्यस्यासाधारणत्वे साध्यतावच्छेदकविशिष्टसाध्यविषयकहेतुतावच्छेदकविशिष्टहेतुविषयकग्रहत्वाव्यापकप्रकृतसाध्यनिरूपितसकलव्याप्तिप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविषयकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकत्वं तत्र साध्याप्रसिद्धिसाधनाप्रसिद्ध्यादावतिव्याप्तिवारणायोपात्तस्याव्यापकत्वान्तस्य शरीरे प्रकृते सामान्यव्यभिचारिणोविशेषव्याप्यत्वासम्भवेन विशेषसाध्यनिरूपितव्याप्तिग्रहे साध्यसामान्याभाववद्वृत्तित्वनिश्चयस्य ग्राह्याभावानवगाहिनोप्यनुभवसिद्धप्रतिबन्धकत्वेऽभावाधिकरणनिरूपितवृत्तित्वाभाववज्जलकालनिवह्निमाञ्जलादित्यत्राभावाधिकरणनिरूपितवृत्तित्ववज्जलरूपसाध्याप्रसिद्धिघटिते वह्न्यभाववद्वृत्तिजलेऽव्याप्तिवारणाय साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वमुपादेयं नान्यथा वह्निमानभावाधिकरणनिरूपितवृत्तित्वाभाववज्जलादित्यत्र जलत्वावच्छेदेन वह्न्यभाववद्वृत्तित्ववति जले जलत्वसामानाधिकरण्येनाभाववद्वृत्तित्ववज्जलरूपसाधनाप्रसिद्धिघटितेऽव्याप्तिवारणाय हेतुतावच्छेदकविशिष्ट-

हेतुविषयकत्वमुपादेयमेव साध्यासामानाधिकरण्यस्य विरोधरूपत्वे प्रकृतसाध्यव्यापकीभूताभाव प्रतियोगिप्रकृतहेतुमत्पक्षस्यासाधारण्यत्वे च प्रकृतसाध्यनिरूपितसाध्यसामानाधिकरण्यांशाघटितसकलव्याप्तिप्रकारकप्रकृतहेतुविशेष्यकत्वे सति प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापिका या पक्षतावच्छेदकविशिष्टपक्षविषयकत्वे सति साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वे सति हेतुतावच्छेदकविशिष्टहेतुविषयकग्रहत्वाव्यापिका प्रतिबध्यता तन्निरूपिता या प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितासाधारण्यविषयित्वानवच्छिन्नप्रतिबन्धकतावच्छेदकविषयित्वानवच्छिन्नप्रतिबन्धकता तद्वृत्त्यभावीयप्रतियोगितानिरूपितपरस्परावच्छेदकतावत्त्वमेव तद्वाच्यं तत्राव्यापकत्वान्तदले साध्यतावच्छेदकविशिष्टविषयकत्वहेतुतावच्छेदकविशिष्टविषयकत्वयोः पूर्ववदव्याप्तिवारणम्फलं पक्षतावच्छेदकविशिष्टविषयकत्वस्य बाधातिव्याप्तिवारकप्रतिबन्धकताविशेषणविषयित्वानवच्छिन्नत्वस्य चाभावाधिकरणनिरूपितवृत्तित्वाभाववज्जलकालीनह्रदो वह्निमाञ्जलाज्जलमभावाधिकरणनिरूपितवृत्तित्वाभाववन्त्युभयवज्जलादित्यत्राभावाधिकरणनिरूपितवृत्तित्ववज्जलरूपाश्रयसिद्धिघटिते तादृशबाधघटिते च वन्ह्यभाववद्वृत्तिजलरूपव्यभिचारेऽव्याप्तिवारणायोपादानं बोध्यम् उक्तस्योभयसाध्यकस्थले व्यभिचारत्वाभावरूपत्वेऽप्यभावो वन्ह्याभावाधिकरणनिरूपितवृत्तित्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववन्त्युभयवानित्यत्र वन्ह्यभावाभावाधिकरणनिरूपितवृत्तित्वाभावविशिष्टवदभावरूपे सत्प्रतिपक्षे तादृशवृत्तित्वाभावरूपबाधघटितेऽव्याप्तिवारणाय तादृशविषयित्वानवच्छिन्नत्वमवश्यमुपादेयम् पक्षवृत्तित्वांशेविषितसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेतोरसाधारण्यरूपत्वे च बाधवारकदलघटकप्रतिबन्धकताया मसाधारण्यविषयित्वानवच्छिन्नत्वन्नविशेषणम् अपितु प्रकृतानुमित्यप्रतिबन्धकत्वासाधारण्यविषयिताशून्यत्वोभयाभावोयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकोविशेष्यदलात्मकतयाविवक्षणीयस्तन्निवेशप्रकारश्चासकृदावेदितः साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वादिनिवेशफलम्प्राग्वत् ।

आहार्य्यस्थलानुरोधेन निर्वक्ष्यमाणकल्पानुसारेण व्यभिचारत्व-त्वञ्च यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामा-न्ये विरोधिविषयताप्रयुक्तस्ताद्रव्याप्तिविषयकत्वाभावस्तत्वं यद्रूपाव-च्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये साध्यतावच्छेद-कादिविशिष्टसाध्यविषयकत्वाभावस्तद्भिन्नत्वविशेषितस्वोऽयम् प्रकृ-तसाध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्यासाधारण्यत्वपक्षे च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वताद्व्याप्त्यवच्छिन्नप्रकृत-हेत्ववगाहित्वसमुदायाभावो विशेष्यदलघटकः बाधवारकविशेषणश्च असाधारण्यविषयिताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यव-हितोत्तरानुमितिसामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्ताद्भि-न्नत्वरूपमेवावसेयम् अत्रच पक्षे स्वरूपसम्बन्धावच्छिन्नत्ववाच्यत्व-त्वावच्छिन्नत्वोभयाभाववत्प्रतियोगित्वकालीनवह्निमान्वाच्यत्वादि-त्यत्र तादृशवह्न्यभाववद्वृत्तिवाच्यत्वेऽनुपसंहारित्वघटितेऽव्याप्तिः एवं वह्निमान्वन्ह्यभाववद्वृत्तिजलादित्यत्र साधारण्यघटितेऽसाधारण्ये-ऽव्याप्तिः अतोव्यभिचारतात्वं न साजात्यघटकमपितु सा-ध्यतावच्छेदकादिविशिष्टविषयकग्रहाविरोधित्वे सति प्रकृत साध्यनिरूपितसकलान्वयव्याप्त्यवगाहिग्रहविरोधित्वरूपसाधारण्या-नुसारेण प्रतिबन्धकत्वाघटितं साधारण्यतात्वं साध्यासामाना-धिकरण्यस्यासाधारण्यत्व पक्षे उक्तग्रहाविरोधित्वे सति सा-ध्यसामानाधिकरण्यग्रहविरोधित्वरूपासाधारण्यत्वानुसारेणानुमि-तिप्रतिबन्धकत्वाघटितमुक्तरीत्या निरुच्यमानमसाधारण्यतात्वं प्रकृतसाध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्यासाधारण्य-तायामुक्तबाधवारकविशेषणसहितं यद्रूपावच्छिन्नविषयकनिश्चया-व्यवहितोत्तरानुमितिसामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्वा-भावस्तत्वमसाधारण्यतात्वं पक्षवृत्तित्वाघटितस्यासाधारण्यतायां प्रकृतहेतुधर्म्मिकप्रकृतसाध्याभावनिरूपितव्यतिरेकव्याप्त्य भावा व-गाहिग्रहविरोधित्वानुसारेणोक्तरीत्या निरुच्यमानमसाधारण्य-तात्वम् उक्तग्रहाविरोधित्वे सति प्रकृतसाध्यनिरूपितव्यतिरेकव्या-प्त्यवगाहिग्रहविरोधित्वात्मकानुपसंहारितात्वानुसारेणोक्तरीत्योपव-र्णितम् अनुपसंहारितात्वत्वञ्चान्यतमत्वादिना तद्घटकं तथा च नानुपसंहारित्वादिघटिते साधारण्यादौ दोषः ।

अनुपसंहारित्वञ्च प्रतियोगित्वनिष्ठसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्त्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वहेतुतावच्छेदकावच्छिन्नत्वोभयाभाववत्त्वञ्च प्रकृत हेत्वादिनिष्ठाभावप्रतियोगित्वादिकञ्च न तथा दुर्वचत्वात्, इत्येतदनुपसंहारिग्रन्थे प्रपञ्चितम् प्रतिबन्धकत्वघटितकल्पे चोक्तस्थलानामाहार्य्यस्थलत्वेन तत्रत्यदोषस्य परित्याज्यतया साजात्यशरीरे न साधारण्यतात्वादीनां प्रवेशोऽपितु व्यभिचारितात्वस्यैव कार्य्योलाघवादिति विभाव्यम् अत्र साधारण्यतात्वशरीरेऽविरोधित्वान्तकार्य्यकारिविशेषणफलं व्यभिचारितात्वघटकतत्प्रागुक्तफलवदेव। असाधारण्यतात्वशरीरे च वह्निव्यापकाभावनिरूपितत्वाभाववत्प्रतियोगित्वकालीनवह्निसाध्यके वन्ह्यभाववत्पक्षस्यापि वाधतया तदुन्नायकव्यतिरेकव्याप्तिमद्धेतोरप्यसाधारण्यत्वौचित्येन साध्याप्रसिद्धिघटिते तत्राव्याप्तिवारणं वाधवारकस्य च प्रतियोगित्वं तादृशनिरूपितत्वाभाववद्धुभयवदित्यत्र प्रतियोगित्वं निरूपितत्वाभावघत्तद्व्यक्तित्वादित्यत्र वाधघटितासाधारण्येऽव्याप्तिवारणफलं वह्निमान् काञ्चनजलादित्यत्रैव वह्निमान् तादृशप्रतियोगित्वकालीनजलादित्यत्रापि वह्निव्यापकीभूताभावप्रतियोगिजलस्यासाधारण्यत्वमनुभवसिद्धं नच काञ्चनजललिङ्गकस्थले हेतुमत्तानिश्चयस्यानाहार्य्यत्वमिति तस्य प्रतिबन्धकत्वं युक्तमत्रतु न तथात्वमितिकुतोस्य दोषतेतिवाच्यं यस्य प्रकृतसाध्याभावनिरूपितया प्रकृतहेतुनिष्ठया तत्सामान्यनिष्ठया वा व्यतिरेकव्याप्त्या घटितस्य निश्चयोत्तरं प्रकृतानुमितिः प्रकृतहेतुलिङ्गिका न जायते तस्यैवासाधारण्यत्वादुक्तप्रतिबन्धकत्वस्य तत्रानुपयोगात् अन्यथा प्रतिबन्धकज्ञानविषयवह्न्यभाववह्न्यभाववदादेर्वाधतापि न स्यादिति उक्तासाधारण्ये साधनाप्रसिद्धिघटितेऽव्याप्तिवारणञ्च उक्तयोरसाधारण्यत्वं यदि नानुभविकं नदेयमेव तद्विशेषणम् अनुपसंहारितात्वशरीरे च तत्फलं स्वरूपसम्बन्धावच्छिन्नत्ववाच्यत्वत्वावच्छिन्नत्वोभयाभाववत्प्रतियोगित्वकालीनकाञ्चनमयत्ववद्वह्निमान् वाच्यत्वाद्वाच्यत्ववान् तादृशवह्नेरित्येतत्स्थलयोः साध्याप्रसिद्धिसाधनाप्रसिद्ध्यो रनुपसंहारित्वघटितयोरव्याप्तिवारणमेवेत्यलम्।

यच्चासाधारणतात्वमुक्तं तदेव मतभेदेन विरोधतात्वं तत्र साध्यासामानाधिकरण्यस्य विरोधत्वे गोत्वाधिकरणनिरूपितवृत्तित्वा-

भाववद्भावकालीनगोत्वस्य साध्यत्वे निरुक्तकालीनत्वविशेषिताश्वत्वस्य हेतुत्वे च गोत्वासमानाधिकरणाश्वत्वेऽसिद्धिघटितेऽव्याप्तिवारणमविरोधित्वान्तफलकमेध्यम् ।

सत्प्रतिपक्षतात्वञ्च पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापिका या साध्यतावच्छेदकविशिष्टसाध्यविषयकपक्षतावच्छेदकाविशिष्टपक्षविषयकग्रहत्वाव्यापिका प्रतिबन्धकता तन्निरूपितप्रतिबन्धकतावच्छेदिका सती तत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका या विषयिता तन्निरूपकतावच्छेदकत्वं तत्र च वह्न्यभावाभावाधिकरणनिरूपितवृत्तित्वाभाववद्भावकालीनह्रदपक्षकवह्निसाध्यके ह्रदपक्षके तादृशाभावकालीनवह्निसाध्यके च पक्षाप्रसिद्धिसाध्याप्रसिद्धिघटिते वह्न्यभावव्याप्यवद्ध्रदेऽव्याप्तिवारणाय तादृशग्रहत्वाव्यापकत्वनिवेशनम् अभावो वह्न्यभावाभावाधिकरणनिरूपितवृत्तित्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिकाभाववह्न्युभयवानित्यत्र तादृशवृत्तित्ववद्भावात्मकबाधघटिते वह्न्यभावव्याप्यवद्भावरूपसत्प्रतिपक्षेऽव्याप्तिवारणाय तादृशजनकतावच्छेदकत्वात्मकाविशेष्यदलम् द्रव्यत्वावच्छेदेन गुणव्याप्यव्याप्यवद्द्रव्यपक्षकगुणाभावसाध्यके गुणव्याप्यवद्द्रव्येऽव्याप्तिः तादृशद्रव्यं गुणाभाववदिति बुद्धौ द्रव्यत्वावच्छेदेन गुणव्याप्यवत्ताबुद्धेः प्रतिबन्धकतया तत्प्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकपक्षघटितत्वात्सत्वेत्यतः सत्यन्तोपादानम् पर्वतो वह्न्यभाववह्निव्याप्यव्याप्याभावोभयवानित्यत्र वह्निव्याप्यव्याप्यवत्पर्वतरूपबाधवारणाय सत्प्रतिपक्षलक्षणे विशेष्यदले प्रतिबन्धकत्वस्य प्रकृतानुमितिप्रतिबध्यतानिरूपितत्वेनोपादानं परस्पराविशेषस्य संसर्गत्वाभावेपि लक्षणसम्पादकमुपेक्ष्य यत्सत्प्रतिबन्धकतात्वेनोपादानं तत् वह्निव्याप्यव्याप्यव्यापकवह्निसमानाधिकरणवह्निव्याप्यव्याप्यवत्पर्वतस्य सत्प्रतिपक्षत्वे तत्राव्याप्तिवारणाय प्रकृतेपि कार्य्यमेव प्रतिबन्धकत्वाघटितञ्च तत् यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिसामान्ये साध्यतावच्छेदकाविशिष्टसाध्यादिविषयकत्वाभावस्तद्भिन्नत्वेसति यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्वा भाव-

प्रयोजकोयदभावोस्ति तदभावो यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्येस्ति तद्रूपावच्छिन्नविषयकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वे सति तत्त्वम् एतद्गुणश्च निरुक्तरूपभेदवद्रूपविशिष्टरूपवत्त्वम् वैशिष्ट्यञ्च स्वतादात्म्य स्वावच्छिन्नविषयितावन्निश्चयाव्यवहितोत्तरानुमितित्वव्यापकपक्षसाध्यवैशिष्ट्यावगाहित्वाभावप्रयोजकाभाववृत्तिव्यापकतारूपाभावीयप्रतियोगितानिरूपितपरस्परीयावच्छेदकतावद्रूपावच्छिन्नविषयताकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतावच्छेदकत्वोभयसम्बन्धेनेति दिक् ।

असिद्धित्वत्वञ्च प्रकृतसाध्यप्रकृतहेतुपरामर्शत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता साधारण्यादित्रयानिरूपितयद्रूपावच्छिन्ननिरूपितविषयितावन्निश्चयत्वव्यापिका तत्त्वं विरोधश्चैवं प्रकृतसाध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुरेव अस्यासाधारण्यत्वे चासाधारण्यानिरूपितत्वस्थाने विरोधानिरूपितत्वविशेषणमुपादेयम् असिद्धिश्च पक्षाप्रसिद्धिः साध्याप्रसिद्धिः स्वरूपासिद्धिः साध्यव्याप्तिविशिष्टपक्षधर्मत्वाभाववद्धेत्वादिर्व्याप्यत्वासिद्धिश्च साध्यसाधनाप्रसिद्ध्योः व्याप्यत्वासिद्धौ स्वरूपासिद्धौ वान्तर्भावाङ्गीकारान्न त्रैविध्यहानिरित्यसिद्धिग्रन्थे दीधितिकृता वक्ष्यते अत्र च धूमाभाववद्वृत्त्ययोगोलकीयवह्निर्धूमवान्वह्नेरित्यत्र पक्षाप्रसिद्धौ धूमाभाववद्वृत्त्ययोगोलकीयवह्नौ धूमाभाववद्वृत्तिवह्न्यात्मकव्यभिचारघटितायामव्याप्तिवारणाय साधारण्यानिरूपितत्वोपादानं धूमाभाववद्वृत्तिवह्निश्च नासिद्धिः तद्बुद्धेः वह्नित्वसामानाधिकरण्येनैव धूमाभाववद्वृत्तित्वावगाहिपक्षतावच्छेदकविशिष्टविषयकबुद्धावविरोधित्वात् न च प्रागुक्तव्यभिचारतात्त्वस्योक्तासिद्धित्वसाधारणतया तत्राव्याप्तेर्दुरुद्धरत्वेन तद्वारणायात्रासिद्धित्वत्वशरीरे साधारण्यानिरूपितत्वोपादानमफलमिति वाच्यम् एवं सत्यत्र विशिष्टपक्षे विशिष्टसाध्यसाधनवत्त्वावगाहिग्रहाविरोधित्वघटितयथाश्रुतव्यभिचारतात्त्वस्यैवात्रोपादेयत्वात् तथा सत्युक्ताव्याप्त्यसम्भवात् एवं वह्निजन्यत्वं वह्निमद्वह्निजन्यत्वादित्यत्र वह्निजन्यत्वाभावनिरूपितव्यापकसामानाधिकरण्यरूपव्याप्तिमद्वह्निव्यभिचारित्ववद्वह्निजन्यत्वस्य स्वरूपासिद्धित्वे तत्राप्यव्याप्तिवारणाय साधारण्यानिरूपितत्वोपादानं बोध्यम् ।

यदि चैवं विशिष्टान्तराघटितत्वेनाघटितसाध्यसाधनग्रहाविरोधीयादिव्यभिचारलक्षणोक्तेः व्यभिचारघटितबाधेऽव्याप्त्युक्तेश्च सन्दर्भविरुद्धत्वान्नैवमिति विभाव्यते तदापि धूमाभाववन्निरूपितवृत्तित्वाभावाधिकरणनिरूपितत्वाभाववदाधेयत्वं धूमवान्वह्नेरित्यत्र धूमाभाववद्वृत्तित्वव्याप्यवह्नौ पक्षाप्रसिद्धिघटितासाधारण्येऽव्याप्तिवारणाय तदुपादानं सार्थकं भवत्येव। गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावो गोत्ववानश्वत्वादित्यत्राश्रयासिद्धिघटिते गोत्वासमानाधिकरणाश्वत्वरूपासाधारण्येऽव्याप्तिवारणाय धूमत्वं वह्निमद्धूमत्वादित्यत्र धूमत्वाभावव्याप्यवह्निसामानाधिकरण्याभाववद्धूमत्वेऽसाधारण्यघटितस्वरूपासिद्धावव्याप्तिवारणाय चासाधारण्यानिरूपितत्वोपादानम् स्वरूपसम्बन्धावच्छिन्नत्ववाच्यत्वत्वावच्छिन्नत्वोभयानिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववदभावो वाच्यत्ववानित्यत्रानुपसंहारिणि पक्षाप्रसिद्धिघटितेऽव्याप्तिवारणायानुपसंहारित्वानिरूपितत्वप्रवेशः। विशेषगुणाभाववान् घटो द्रव्यं गुणसामान्याभावादित्यत्र स्वरूपासिद्धिघटितविशेषगुणवद्घटरूपाश्रयासिद्धावव्याप्तिवारणायासिद्धित्वत्वं न साजात्यघटकमपितु पक्षाप्रसिद्धित्वस्वरूपासिद्धित्वव्याप्यत्वासिद्धित्वत्वमेव तत्र पक्षाप्रसिद्धित्वत्वं पक्षतावच्छेदकविशिष्टपक्षविषयकग्रहत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकत्वं स्वरूपासिद्धित्वञ्च पक्षतावच्छेदकविशिष्टविषयकहेतुतावच्छेदकविशिष्टविषयकग्रहत्वाव्यापिका या प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिवध्यता तन्निरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परीयावच्छेदकतावत्त्वं तत्र प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववदभावो धूमवान् वह्नेरित्यत्र पक्षाप्रसिद्धिघटितस्वरूपासिद्धौ वह्निमद्ध्रदकालीनोभावो घटवानुक्तवह्न्यभावादित्यत्र स्वरूपासिद्धिघटितपक्षाप्रसिद्धौ वाऽव्याप्तिवारणाय पक्षतावच्छेदकविशिष्टविषयकत्वस्याव्यापकत्वशरीरे प्रवेशः ह्रदपक्षकधूमाभावाभावाधिकरणनिरूपितत्वाभाववदाधेयत्वकालीनधूमहेतुकस्थले हेत्वप्रसिद्धिघटिते धूमाभावव्याप्यवद्ध्रदेऽव्याप्तिवारणायाव्यापकत्वशरीरे हेतुतावच्छेदकविशिष्टविषयकत्व-

स्य च प्रवेशः कृतः।

प्रकृतसाध्यतावच्छेदकप्रकृतहेतुतावच्छेदकाविशिष्टाविषयकग्रहत्वव्यापकहेतुपक्षवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिवध्यताभिन्नप्रकृतपरामर्षत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्साधारण्यादित्रयानिरूपितविषयितानिरूपकतावच्छेदकत्वं व्याप्यत्वासिद्धित्वत्वं तत्र भेदप्रतियोगिशरीरेऽव्यापकत्वान्तनिवेशनं साध्यसाधनाप्रसिद्धोरव्याप्तिवारणाय प्रागुक्तस्वरूपासिद्धिघटितसाध्याप्रसिद्धावव्याप्तिवारणाय प्रकृते व्याप्यत्वासिद्धिलक्षणे च स्वरूपासिद्धावतिव्याप्तिवारणाय प्रतिवध्यताभिन्नत्वोपादानम् प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववदभावपक्षकवह्निमद्ध्रदसाध्यकस्थले पक्षाप्रसिद्धिघटित साध्याप्रसिद्धावप्यव्याप्तिवाणसम्भवः साधारण्यादित्रयानिरूपितत्वस्य च फलं यत्प्राक्पक्षाप्रसिद्धिघटितसाधारण्यादित्रिकेऽव्याप्तिवारणमभिहितं तदिदानीं तत्पक्षस्य हेतुत्वे तद्घटकत्वे वा साधनाप्रसिद्धिघटिते साधारण्यादित्रिकेऽव्याप्तिवारणम्बोध्यम् ॥ वह्नेर्हेतुतास्विहाय तत्रोक्तपक्षकालीनजलस्य हेतुत्वम्बोध्यम्।

वस्तुतस्तूक्तवह्न्यभाववदभावहेतुकवह्निमद्ध्रदसाध्यके साधनाप्रसिद्धिघटितसाध्याप्रसिद्धावेवमप्यव्याप्तिवारणायोगात् साध्याप्रसिद्धित्वत्वं साधनाप्रसिद्धित्वत्वञ्च पृथगेव वक्तव्यं प्रतिवध्यताभेदशरीरेऽव्यापकत्वाप्रवेशेन व्याप्तिविशिष्टपक्षधर्म्मत्वाभाववद्धेतुसाध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्योभयाभाववद्धेत्वादिसाध्यहेतुनिष्ठावृत्तित्वादिसाधारणं प्रागुक्तव्याप्यत्वासिद्धित्वत्वञ्च साधारण्यादित्रयानिरूपितत्वमपि फलतः सामानाधिकरण्याविशेषितसाध्याभाववदवृत्तित्ववद्धेतुहेतुव्यापकसाध्यादिविषयकत्वे सति केवलसाध्यसामानाधिकरण्यप्रकारकत्वे सति साध्यतत्त्वावच्छेदकधर्म्मसम्बन्धावच्छिन्नत्वद्वयवत्प्रतियोगित्वाविषयकत्वे सति प्रकृतपक्षे प्रकृतसाधनवैशिष्ट्यावगाहिग्रहत्वाव्यापकत्वरूपमुपात्तप्रतिवध्यताभेदनिवेशस्यापि कार्य्यकार्य्यैकमेव निवेशनीयं लाघवात् प्रकृतेऽव्यापकत्वशरीरे ग्रहांशे तत्तद्विषयकत्वप्रवेशफलं साध्यसाधनाप्रसिद्धिस्वरूपासिद्धि साधारण्यादित्रयेष्वन्ततोहेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिघटितत्वेन व्याप्यीभूतव्याप्यत्वासिद्ध्यन्यतमघ-

टिते ऽव्याप्तिवारणमवसेयम् । प्रतिबन्धकत्वाघटितमसिद्धित्वत्वा-दिकञ्चोपदर्शिततथाविधसत्प्रतिपक्षत्वत्वादिवन्निर्वक्तव्यमिति ।

बाधत्वत्वञ्च उद्देश्यतावच्छेदकतातिरिक्तविशिष्टपक्षाविशिष्टसाध्यविषयतान्तःपातिप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपिता या स्व-निरूपितप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रति-बन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेद-कविषयित्वानवच्छिन्नप्रतिबन्धकता तदनतिरिक्तवृत्तिविषयितानिरू-पकतावच्छेदकत्वम् उद्देश्यतावच्छेदकत्वस्प्रकारतावच्छेदकत्वस्याप्यु-पलक्षकं तेन ह्रदः काञ्चनमयवह्निमानित्यत्र काञ्चनमयत्वप्रकारताया उद्देश्यतावच्छेदकतातिरिक्तत्वे तथाविधविषयतान्तःपातित्वे ऽपि च न साध्याप्रसिद्धौ दोषः पक्षतावच्छेदकसाध्यतावच्छेदकाविशिष्टवि-षयकग्रहाविरोधित्वस्य सुप्रसिद्धस्य वह्निमान्ह्रदोवह्निमानित्यत्र बा-धाव्याप्तिभयेन परित्यागः पर्वतपक्षकवह्न्यभाववह्निव्याप्याभावोभ-यसाध्यकस्थले सत्प्रतिपक्षात्मकबाधे लक्षणसङ्गतये जनकतावच्छे-दकत्वघटकप्रतिबध्यतायाः प्रकृतानुमितित्वव्यापकत्वेन दीधित्याद्यु-क्तायाः स्वनिरूपितप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नत्वेन निवेशः वह्न्यधिकरणनिरूपितवृत्तित्वाभावद्भाववत्कालीनवह्नेः साध्यत्वे ता-दृशह्रदस्य पक्षत्वे च साध्यपक्षाप्रसिद्धिघटिते वह्न्यधिकरणावृत्तिम-त्पक्षरूपबाधे ऽव्याप्तिवारणाय प्रकृते उद्देश्यतावच्छेदकत्वातिरिक्त-त्वविशेषणम् प्रागुक्ते बाधघटितसत्प्रतिपक्षे ऽव्याप्तिवारणाय निरुक्तवि-षयित्वानवच्छिन्नत्वस्य प्रतिबन्धकत्वविशेषणतयोपादानम् अस्यानु-गमश्च तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टप्रतिबन्धकता-वृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वम् वैशिष्ट्य-ञ्च स्वतादात्म्य स्वनिरूपितप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नप्र-तिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानि-रूपितजनकतावच्छेदकविषयित्वानवच्छिन्नत्वोभयसम्बन्धेन प्रति-बन्धकत्वाघटितस्यापि निरुक्तिरूह्येति ।

अथ विशेष्यदलवैयर्थ्यमुक्तान्यतमरूपेण व्यभिचारत्वादिरूपदो-षतावच्छेदकभिन्नानां सजातीयासिद्ध्याऽतिव्याप्त्यसम्भवात् एव-ञ्च प्रतिबन्धकत्वाघटितलक्षणेऽपि विशेष्यदलसमुदायवैयर्थ्यसम्भवे विरोधिविरोधिविषयताप्रयुक्तत्वदलमात्रवैयर्थ्यप्रतिपादनमप्यसङ्गत-

मितिचेन्न साजात्यघटकबाधत्वादिशरीरेऽव्याप्यवृत्तित्वभ्रमानास्क-
न्दितत्वनिवेशे प्रयोजनाभावेन सामान्यतोऽव्याप्यवृत्तित्वज्ञानाना-
स्कन्दितत्वस्यैव निविष्टत्वेन वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभा-
ववद्वृक्षत्वे बाधत्वत्वस्य सत्तया तदवच्छिन्नेऽतिप्रसङ्गवारणाय वि
शेष्यदलसार्थक्यात् तत्र च निश्चयविशेषणतयाऽव्याप्यवृत्तित्वभ्र-
मानास्कन्दितत्वस्यैव घटकतायाः प्रागुक्तत्वात् नच विशेष्यदल
निवेशापेक्षया साजात्यघटकबाधत्वत्वादिशरीरे विशिष्याव्याप्यवृ-
त्तित्वभ्रमानास्कन्दितत्वनिवेशस्य लघुत्वात् तदेव निवेशयितु मुचि-
तमितिवाच्यं विशेष्यदले मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तौ तद्वार-
णाय विशेषणोपादानन्तत्रैवोपादेयं यथा न विशेष्यदलक्षतिरन्य-
थोपजीव्यविरोधादितिबाधत्वत्वादिशरीरे ऽव्याप्यवृत्तित्वभ्रमानास्क-
न्दितत्वस्यानिवेशनीयत्वात् अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वादिघ-
टितबाधत्वादिसहितरहितविशेष्यदलस्य लक्षणान्तरत्वन्तु को नाम
निवारयितुमीष्टे ॥ अतएव विरोधिविषयताप्रयुक्तत्वप्रयुक्तगौरवं पुर
स्कृत्य निर्बीजप्रतियोगिस्वत्वघटितविशेषणानुधावनमोचितमित्यपा
स्तम् विरोधिविषयताप्रयुक्तत्वस्य विशेष्यदलघटकतया तद्वैयर्थ्ये विशे
ष्यस्वरूपहानावुपजीव्यविरोधापत्त्या प्रतियोगिस्वत्वमन्तर्भाव्यैव वि
शेषणदलस्योपादेयत्वात्। किञ्च बाधत्वत्वव्यभिचारत्वत्वाद्येकैकशरी
रेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वनिवेशे लक्षणशरीरे गुरुभूतानेकभ्र
मत्वोपादानापेक्षयैकभ्रमत्वघटितविशेष्यदलोपादानस्यैव युक्तत्वात्।

यत्तु वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादिरूपावच्छेदकधर्म
दर्शनविषयविशिष्टेऽतिव्याप्तिवारणाय बाधत्वत्वादिप्रत्येकशरीरे वि
शिष्टद्वयाघटितत्वादिनिवेशापेक्षया तादृशसकलदोषवारणायैकवि
शिष्टद्वयाघटितत्वघटितविशेष्यदलोपादानस्यैव युक्तत्वम् न च
बाधत्वत्वादिप्रत्येकशरीरे विशिष्टद्वयाघटितत्वं न निवेश्यते
येन गौरवं स्यादपितु स्वपदार्थ एव विशिष्टद्वयविषयताशून्य-
प्रतीतिविषयतावच्छेदकत्वं तावतैव सर्वदोषाणाम्वारणादितिवाच्यं
गगनवदभावोगगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तित्ववत्कालीनव-
ह्निमाञ्जलादित्यत्रासाधारण्येऽव्याप्तेः तादृशासाधारण्यत्वावच्छिन्नप्र-
तीतेर्गगनाभाववत्तादृशवृत्तित्ववत्त्वावच्छिन्नविषयताविशिष्टतादृशवृ-
त्तित्ववदभावत्वावच्छिन्नविषयताशून्यत्वविरहात् विशेष्यदलस्य त

दुघटितस्योपादाने यथा न तत्राव्याप्तिस्तथोक्तं विशिष्टद्वयाघटितत्वविचारे ॥ नच वह्न्यभाववज्जलवत्त्कालीनह्रदो वह्निमानित्यत्र जलव्यापकवह्न्यभावसमानाधिकरणजलवत्ताद्दशह्रदरूपसत्प्रतिपक्षे यद्यपि जलवत्ताद्दशह्रदत्वमादाय नाव्याप्तिः बाधत्ववारकविशेषणेनैव जलवत्ताद्दशह्रदत्वस्यापि वारणात् तथापि ताद्दशह्रदपक्षकवह्निहेतुके स्वरूपासिद्धावव्याप्तिः सम्भवतीति स्वरूपासिद्धित्वत्वादिशरीरे विशिष्टद्वयाघटितत्वं प्रवेश्यमेवेति वाच्यं प्राक् प्रदर्शितबाधघटितसत्प्रतिपक्षस्थलीयसाध्यस्य हेतुतया विवक्षितत्वे स्वरूपासिद्धिघटितस्वरूपासिद्ध्यन्तरेऽव्याप्तिवारणाय हेत्वभाववत्पक्षादिमात्रवृत्तिस्वरूपासिद्धित्वत्वं बाधत्वत्ववद्धेत्वभावव्याप्यवत्पक्षादिमात्रवृत्तिस्वरूपासिद्धित्वत्वं सत्प्रतिपक्षत्वत्ववन्निर्वचनीयमिति जलव्यापकवह्न्यभावसमानाधिकरणजलवत्ताद्दशह्रदरूपस्वरूपासिद्धावपि सत्प्रतिपक्षवदेव दोषासम्भवादिति तन्न गगनाभाववद्भाववत्कालीनघटो गगवानित्यादौ बाधत्वादिसजातीयाभाववत्ताद्दशघटत्वमादायाव्याप्तिवारणाय बाधत्वत्वादिशरीरे विशिष्टद्वयाघटितत्वस्य प्राक् परिः कृतस्यावश्यवाच्यत्वात् ।

कश्चित्त्वत्र बाधत्वत्वादिशरीरघटकपद्रूपावच्छिन्नविषयता ताद्दशप्रतिबध्यताविशिष्टजन्यतावच्छेदकत्वेन विवक्षणीया तथा च नाभाववत्ताद्दशघटत्वमादाय बाधेऽव्याप्तिः एवञ्च ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयत्वसामान्यकाभावद्ध्रदत्वमादायाव्याप्तिप्रसङ्गेन स्वरूपसम्बन्धरूपावच्छेदकत्वस्विहायानतिरिक्तवृत्तित्वरूपावच्छेदकत्वप्रवेशस्यापि नावसरः अभावद्ध्रदत्वावच्छिन्नविषयत्वस्य जन्यतानवच्छेदकत्वात् न च यद्रूपदस्येव स्वपदस्यापि दोषतावच्छेदकगतसमुदायत्वपरतया एव वाच्यतया मेयत्वविशिष्टवह्न्यभाववद्ध्रत्वगतसमुदायत्ववृत्तिव्यापकतारूपाभावप्रतियोगितावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वगतसमुदायत्वे सत्त्वात् तयोस्साजात्यासम्भवः स्यादिति ताद्दशप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्वं स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वसम्बन्धावच्छिन्नबाधत्वादिरूपं वाच्यं तथाच स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षेऽपि अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्विषयितानिरूपितस्वावच्छि

अनुयोगितारूपर्य्याप्तिकावच्छेदकताकनिरूपकत्वसम्बन्धावच्छिन्न-सम्बन्धित्वाभाववत्त्वसम्बन्धावच्छिन्नं ग्राह्यम् न तत्राभाववद्ध्रद-त्वावच्छिन्नविषयत्वमादाय दोषसम्भवः वह्न्यभावद्ध्रदत्वगतसमुदा-यत्ववृत्तेर्विशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकत्ववत्त्वस्याभाववद्ध्रद-त्वगतसमुदायत्वे विरहेण साजात्यविरहादिति वाच्यं तादृशप्रति-बध्यतानिरूपितप्रतिबन्धकतात्वस्य विशिष्टनिश्चयत्वावच्छिन्न-प्रतिबन्धकत्वज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वोभयसाधारणतया-तादृशप्रतिबन्धकतात्वावच्छिन्ननिरूपकताकाधिकरणत्वस्यैक्यादन्य-थाऽसम्भवापत्तेः बाधविपरीतबाधयोः प्रतिबन्धकत्वस्यैक्याभावा-दिति वह्न्यभाववद्ध्रदत्वगतसमुदायत्वाभाववद्ध्रदत्वगतसमुदाय-त्वयोः साजात्यसम्भवात् अतएव तादृशतत्प्रतिबध्यतात्वमपि न साजात्यघटकं प्रतिबन्धकताभेदे प्रतिबध्यताभेदस्यावश्यकत्वात्त्वा-वच्छेदकधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतागर्भसम्ब-न्धोपादाने क्षत्यभावः विशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वज्ञानवै-शिष्ट्यावच्छिन्नप्रतिबन्धकत्वनिरूपितयोः प्रतिबध्यतयोरेकधर्मांव-च्छिन्नत्वात् ।

वस्तुतो ह्रदोमहानसीयवह्निमानित्यत्र पर्वतोवह्न्यभावधूमाभा-वोभयवानित्यत्र च महानसीयवह्न्यभावद्ध्रदवह्न्यभाववद्ध्रदनि-श्चयनिरूपितप्रतिबध्यत्वयोर्वह्निमत्पर्वतधूमवत्पर्वतरूपबाधनिश्चयनि-रूपितप्रतिबध्यत्वयोरेकधर्म्मावच्छिन्नत्वाभावेन एकप्रतिबध्यताव्य-क्तिघटितबाधत्वत्वस्योपादाने बाधद्वये लक्षणसम्भवस्य दुर्घटत्वा-दित्यनुगतरूपेणैव प्रतिबध्यत्वस्य बाधत्वत्वादिशरीरे निवेशः कार्य्यः नच तादृशजन्यतावच्छेदकविषयतावच्छेदकत्वमेवास्तु बाधत्वत्वादिकमितिवाच्यं यावद्विशेष्यदलानुपादानं कपिसंयो-गाभाववद्वृक्षेऽतिव्याप्तेः बाधत्वत्वघटकाविशेष्यदलस्यावश्योपादेय-त्वाद्विशेष्यदलोपादानेपि वह्न्यभाववज्जलव्याप्यवत्कालीनत्वे सति जलाभाववद्वह्निव्याप्यवत्कालीनह्रदः शुक्लजलाभाववह्न्युभयवानित्यत्र शुक्लजलवत्तादृशह्रदरूपबाधे तादृशजन्यतावच्छेदकजलवद्ध्रदत्वाव-च्छिन्नविषयतावच्छेदकाविशिष्टान्तरभूतजलवत्तादृशह्रदत्वमादायाव्याप्तिवारणाय बाधत्वत्वघटकस्य तस्यावश्यवाच्यत्वात् अनुयोगि-स्वत्वान्तर्भावे यस्य स्वपदेनोपादेयता प्रतियोगिस्वत्वान्तर्भावेपि वि-

शिष्टान्तरीभूततादृशधर्म्मघटितत्वाद्भवति स्वपदोपादेयता तस्येति तुल्य एवोक्ताऽव्याप्त्यादिर्दोषः प्रतिबन्धकत्वाघटितनिरुक्तौ स्वरूपसम्बन्धरूपावच्छेदकत्वस्थानीयनिवेशे यद्रूपावच्छिन्नविषयतासामान्ये विरोधिविषयताप्रयुक्तस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्य प्रयोजकत्वन्तरत्रं बाधत्वत्वादिशरीरघटकतयोपादेयम् तादृशजन्यतावच्छेदकत्वस्थाने च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावनिरूपिता या विरोधिविषयताप्रयुक्ताधिकरणता तद्विशिष्टजन्यतावच्छेदकत्वम् वैशिष्ट्यं स्ववृत्तित्वयोः यद्रूपावच्छिन्नविषयताशालिनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापकताऽरूपाभावः तदीयप्रतियोगितानिरूपितपरम्परीयावच्छेदकतावद्रूपावच्छिन्नविषयत्वावच्छिन्नजनकतानिरूपितत्वस्वविशिष्टविशेष्यत्वाभावाधिकरणतावृत्तिनिरुक्ताभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्रूपावच्छिन्नविषयत्वावच्छिन्नजनकतानिरूपितजन्यताविशिष्टविषयताकाभावनिरूपितत्वसम्बन्धावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन जन्यताविशिष्टत्वञ्च स्वावच्छेदकविशेष्यतावच्छेदकधर्म्मावच्छिन्नत्व स्वावच्छेदकप्रकारतावच्छेदकधर्म्मावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेनेत्येषादिक् ।

बाधकालीनघटत्वाद्यवच्छिन्नविषयताया यथा न स्वरूपसम्बन्धरूपावच्छेदकत्वं तथा न प्रयोजकत्वमपि प्रतिबन्धकतावच्छेदकविषयतायाः एव प्रतिवध्यतावच्छेदकधर्म्माभावप्रयोजकत्वस्य वक्ष्यमाणत्वादिति तादृशघटेऽतिव्याप्तेर्वक्ष्यमाणाया नासङ्गतिः तद्वारणायैवानतिरिक्तवृत्तित्वप्रवेशो नान्यथा तथाचावश्यकतादृशजन्यतावच्छेदकत्वविशेषणेनैवावच्छेदकधर्म्मदर्शनविषयविशिष्टातिव्याप्तिवारणसम्भवात् । लाघवेन तद्वारणाय विशिष्टद्वयाघटितत्वसाहितविशेष्यदलस्य नोपादेयतासिद्धिरित्याह ।

तन्मन्दम् प्रागुक्तकालीनत्वचतुष्टयविशेषितह्रदपक्षकशुक्लजलाभाववह्न्युभयसाध्यके जलवत्तादृशह्रदत्वरूपविशिष्टान्तरतावच्छेदकधर्म्ममादायाव्याप्तेः विशिष्टद्वयाघटितत्वनिवेशनम्बिना वारणस्य दुश्शकयतया तस्योपादेयत्वात् तथाचाभाववद्ध्रदत्वावच्छिन्नविषयत्वमादायाव्याप्तिवारणाय जन्यतावच्छेदकत्वनिवेशापेक्षया लघुभूतमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेव निवेशनीयमित्यन्यथैवानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्योपादेयतासिद्धिः एवञ्च ग्रन्थेऽनतिरिक्तवृत्ति-

त्वघटितव्यभिचारत्वस्य कथनञ्च प्रागुक्तरीत्यावश्योपादेयानतिरिक्तवृत्तित्वघटिततया प्राप्तस्यैव व्यभिचारकालीनघटातिव्याप्तिवारणायानुवादमात्रं नत्वतिव्याप्तिवारकतयैवानतिरिक्तवृत्तित्वस्यापूर्वस्य तत्र प्रवेशः तेन गोत्वमवृत्तीत्यादौ गोत्ववद्रूपवाधेऽव्याप्तिवारणाय प्रतिवन्धकतावच्छेदकत्वस्य प्रागिवेहाप्यन्यतमसम्बन्धेनोक्तौ व्यभिचारकालीनघटेऽतिव्याप्तेरपि तावतैव वारणेनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य तद्वारणार्थत्वानुपपत्तावपि न क्षतिः नचोक्तवाधेऽव्याप्तिमाशङ्क्यैवानतिरिक्तवृत्तित्वोत्कीर्त्तनमुचितमितिवाच्यं मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्योक्तत्वेन तत्र व्यभिचारकालीनघटेऽतिव्याप्तेरेव प्रवलत्वात् झटित्युपस्थितत्वाच्च एवमेतस्यातिव्याप्तिभ्रमनिराकरणान्नान्यत्किमपि फलञ्चिदन्ति तत्त्वविदः ।

यत्वत्र कश्चित् स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे वक्ष्यमाणाया व्यभिचारघटितवाधेऽव्याप्तेः प्रसक्त्यभावादेतत्कल्पखण्डनरूपविवक्षितार्थसिद्ध्यनुपपत्तिस्स्यादिति तदर्थमतिव्याप्तिवारणव्याजेनानतिरिक्तवृत्तित्वसङ्कीर्त्तनमेतत्कल्पखण्डनरूपाविवक्षितार्थसिद्ध्यात्मकफलवत्तामावहतीत्याह तत्र च स्वरूपकसम्बन्धरूपावच्छेदकत्वनिवेशेपि विशेषगुणाभाववान्घटोगुणसामान्याभाववानित्यत्राश्रयासिद्धौ स्वसजातीयविशिष्टान्तरगुणवद्घटरूपवाधघटितत्वादव्याप्तिसम्भवत्येव विशेषगुणवद्घटत्वावच्छिन्नविषयताया अपि गुणवद्घटत्वावच्छिन्नविषयतात्वेन वाधनिर्णयप्रतिवन्धकतानिरूपितस्वरूपसम्बन्धविशेषात्मकावच्छेदकतावत्त्वेन वाधत्वेनोभयोस्साजात्यसम्भवादित्यनतिरिक्तवृत्तित्वानुसन्धानस्य विफलमित्याशङ्क्य स्वविशिष्टविषयित्वानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतिवन्धकतावच्छेदकत्वाभाववद्विषयितानिरूपितस्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वमेव स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयित्वसामान्यनिरूपकतावच्छेदकत्वस्य विवक्षितम् वैशिष्ट्यञ्च स्वनिरूपकप्रतिबन्धकताविशिष्टविषयत्वान्यविषयताशून्यज्ञानीयत्वसम्बन्धेन प्रतिवन्धकतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वव्याप्यप्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धेन तथाचाश्रयासिद्धिविषयताया वाधप्रतिवन्धकताव्याप्यासिद्धिप्रतिवन्धकतावच्छेदकत्वस्यैव सत्त्वेन वा·

धप्रतिबन्धकताविशिष्टत्वविरहेण स्वविशिष्टविषयित्वानुयोगिकस्वरूपेण बाधप्रतिबन्धकतावच्छेदकत्वाभाववत्त्वाद्व्याप्तिरित्यनतिरिक्तवृत्तित्वानुसन्धानं सङ्गच्छते वह्निरित्यादिज्ञानीयविषयित्वस्य वह्नित्वादीनाम्विशिष्टान्तरतादृशरूपत्ववारणाय प्रतिबन्धकतावच्छेदकत्वाभावसम्परत्यर्थं स्वावच्छेदकत्वसम्बन्धप्रवेशः फलतोनन्त्वयगर्भसम्बन्धप्रवेशस्तु स्थलविशेषसम्भावनयैव कृतोन्यथा तु परिचिन्त्यफलः व्याप्यत्वञ्च न्यूनवृत्तित्वञ्चातः स्वस्य स्वव्याप्यत्वनिबन्धनोलक्षणासम्भवः नच स्वभिन्नत्वमेवोपादेयमसम्भवापत्तेः बाधादिज्ञानीयविषयत्वस्यापि बाधादिप्रतिबन्धकताभिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्यैव सत्त्वात् विशेषगुणाभाववान् घटोगुणसामान्याभाववानित्यादावाश्रयासिद्ध्यादिप्रतिबन्धकताभिन्नबाधादिप्रतिबन्धकतावच्छेदकत्वस्याश्रयासिद्ध्यादिविषयतायां प्रसङ्गाच्च नच मेयत्वविशिष्टबाधादिज्ञानीयविषयित्वस्य मेयत्वप्रकारतानिरूपितबाधत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नबाधप्रतिबन्धकताव्याप्यप्रतिबन्धकतावच्छेदकत्वेनोक्तोभयसम्बन्धावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभाववत्त्वेन तत्र वह्न्यभाववद्ध्रदत्वस्य वृत्तित्वादसम्भव इतिवाच्यं स्वावच्छिन्ननिरूपितत्वस्वावच्छिन्ननिरूपितविषयत्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन वृत्तित्वस्य विवक्षितत्वात् नचोक्तोभयसम्बन्धेन मेयत्वविशिष्टबाधत्वस्य तादृशप्रतिबन्धकतावच्छेदकत्वाभाववति मेयत्वविशिष्टबाधत्वावच्छिन्ननिरूपितविषयित्वे वृत्तित्वात्तस्य न बाधत्वत्वमितिवाच्यं क्षत्यभावात् स्वसजातीयाप्रसिद्धेर्वातिव्याप्त्यसम्भवात्।

यत्तु प्रतियोगिस्वत्वकल्पेऽतिव्याप्तिरिति तन्नैतत्प्रक्रियाया अनुयोगिस्वत्वघटितकल्पे एवाश्रितत्वात्।

अथवाऽसम्भवस्य वारणाय व्याप्यप्रतिबन्धकतापदेन प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितस्वव्याप्यप्रतिबन्धकता विवक्षणीया तथाच मेयत्वप्रकारतानिरूपितबाधत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायास्तादृशप्रतिबध्यतानिरूपितत्वविरहेणासम्भवस्य न प्रसक्तिः नचोक्तप्रतिबन्धकताव्याप्यत्वस्य धूमाभाववान् वह्न्यभाववानितिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताया

लिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायामपि सत्त्वेन तदवच्छेदकत्वस्यैव बाधविषयत्वे सत्त्वादितिवाच्यं व्याप्यप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य तदवच्छेदकत्वस्य वानतिरिक्तवृत्तित्वरूपस्य विवक्षितत्वात् एवञ्च मेयत्वविशिष्टबाधत्वस्यापि बाधत्वोपपत्तिः ।

एतेन वन्ह्यभाववद्ध्रदोघटइतिज्ञानस्य वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वेन व्याप्यप्रतिबन्धकतानवच्छेदकविषयताभिन्नविषयतावत्त्वेन च तदीयविषयतामादायासम्भवतादवस्थ्यं नचोक्तवृत्तिताघटकःस्वावच्छिन्नविषयत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयताशून्यज्ञानीयत्वमेव परिःकृतं सम्बन्ध इतिवाच्यम् उक्तनिश्चयविशिष्टनिश्चयमादायात्रापिदोषस्य दुर्वारत्वादितिनिरस्तमिति समाधत्ते च तन्न मनोरमम् ।

ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिरूपकन्यूनवृत्तित्वस्वरूपासिद्धिप्रतिबन्धकतानवच्छेदकविषयताभिन्नविषयताशून्यज्ञानीयत्वविरहेण बाधप्रतिबन्धकतावच्छेदकत्वाभाववति धूमाभाववद्ध्रदकालीनवह्न्यभाववद्ध्रदविषयित्वे वह्न्यभाववद्ध्रदत्वस्य वृत्तित्वात् ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्वेन प्रतिबन्धकतावच्छेदकत्वाभाववति धूमाभाववद्वह्न्यभाववत्कालीनवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वे च तस्य वर्त्तमानत्वादसम्भवः नच स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्वावच्छिन्ननिरूपितत्वोभयसम्बन्धेनात्रापि वृत्तित्वस्विवक्षितमिति न दोष इति वाच्यं वह्नित्वमवृत्तिवह्नित्वाद्वह्नित्वस्वह्नित्ववदवृत्तित्वादित्यादिस्थले वह्नित्वाभाववद्वह्नित्वस्वह्नित्ववदितिज्ञानस्याव्यापकविषयताशून्यतया तदीयविषयतायाः स्वरूपासिद्ध्यादिप्रतिबन्धकत्वन्यूनवृत्तिबाधादिप्रतिबन्धकतावच्छेदकविषयतान्यविषयताशून्यज्ञानीयत्वविरहेण चाव्याप्त्यापत्तेः नच निरुक्तविषयतान्यविषयता मुख्यविशेष्यतात्वेन प्रवेशनीयेति न दोष इति वाच्यं ह्रदोघटभिन्नोवह्नेरित्यत्र वह्न्यभाववान्ह्रदोघट इतिज्ञानमादाय स्वरूपासिद्धावव्याप्त्यापत्तेः नच प्रतिबन्धकताव्याप्यत्वं प्रतिबन्धकत्वाभाववदवृत्तित्वे सति तद्भिन्नत्वं तथाच निरुक्तभ्रमबाधप्रतिबन्धकतायाः स्वरूपासिद्धिप्रतिबन्धकत्वाव्याप्यत्वान्न दोषः न्यूनवृत्तिप्रतिबन्धकतावच्छेदकत्वं वा यद्रूपावच्छिन्नविषयत्वस्प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वस्वाच्यमुक्तज्ञाने तादृशप्रतिबन्धकतान-

तिरिक्तवृत्तिविशिष्टविषयत्वाभावान्नाव्याप्तिरिवाच्यम् असङ्कीर्णं बाधादिस्थले बाधादिनिर्णयप्रतिबन्धकतानिरूपितनिरुक्तव्याप्यत्ववत्या ज्ञानवैशिष्ट्यानवच्छिन्नाया एकरूपेण प्रतिबन्धकत्वपक्षे ज्ञानवैशिष्ट्यावच्छिन्नाया अपि प्रतिबन्धकताया अप्रसिद्धेः तादृशप्रतिबन्धकतानतिरिक्तवृत्तिविशिष्टविषयत्वस्य प्रतिबन्धकताभेदपक्षेप्यप्रसिद्धेर्बाधेऽव्याप्त्यापत्तेः नच स्वव्याप्यप्रतिबन्धकतावच्छेदकत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वमेव संसर्गः एवञ्च फलतोनन्वयप्रवेशोऽपि सार्थक इति वाच्यं वृत्त्यनियामकस्य प्रतियोगितानवच्छेदकत्वे निवेशासम्भवात् धूमाभाववद्वह्न्यभाववत्कालीनह्रदो वह्निमान्धूमादित्यत्र बाधप्रतिबन्धकताव्याप्यधूमवत्ताबुद्धिनिरूपितप्रतिबन्धकतावच्छेदकत्वस्य बाधज्ञानीयविषयत्वे सत्वेन बाधेऽव्याप्तेर्दुरुद्धरत्वात् प्रतिबंधकताभेदपक्षस्यैव व्यवस्थापितत्वेन तत्प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्यापि सम्भवात् इत्यलमसदावेशेन ॥

भवतु कथंचित्स्वरूपसंबन्धरूपावच्छेदकत्वपक्षे विशेषगुणाभाववान्घटोगुणसामान्याभाववानित्यादिस्थले आश्रयासिद्धावव्याप्तिवारणं परंतूक्ततात्पर्योपवर्णनस्यैव सत्वन्न प्रतीमः तथासति तदसदित्यादिग्रन्थ एव तद्विलिखेत् खण्डनग्रन्थोपोद्बलकस्य विना बीजं खण्डनीयग्रन्थे लिखनस्यानुचिततया सन्दर्भाशुद्धिप्रसङ्गात् विशेषगुणवद्घटेऽव्याप्तिवारणाय स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षप्रदर्शितरीत्याऽनतिरिक्तवृत्तित्वपक्षेपि स्वरूपस्वव्याप्यप्रतिबन्धकतानवच्छेदकविषयत्वान्यविषयताशून्यत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रतिबन्धकत्वाभावविवक्षणेन स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षीयाश्रयासिद्ध्यव्याप्तिवारणार्थानुसरणीयप्रकारान्तरवदत्रापि प्रकारान्तरस्य विवक्षणीयत्वेन वा व्यभिचारघटितबाधेप्यव्याप्तिवारणसम्भवात् । नच प्रतियोगिस्वत्वकल्पे धूमव्यभिचारिवह्निमत्त्वमादाय दोषोदुरुद्धर इतिवाच्यं व्यभिचारघटितबाधादावपीत्युपक्रम्य तत्संग्रहानुपपत्तेरित्युपसंहृते ग्रन्थे तत्सजातीयेत्येतद्घटकतत्पदाद्बाधस्यैव प्रत्ययेनानुयोगिस्वत्वघटित कल्पे प्रतियोगिस्वत्वगर्भेपि च व्यभिचारघटितबाधसमुदायमुपादायाव्याप्तिपरताया एव शुद्ध्यवसानत्वात् अन्यथा सर्वथादोषप्रयोजकत्वेनातिशयोपादेयस्य धूमव्यभिचारिवह्निमतः परित्यागस्योन्मत्त

कृत्यतापातात् प्रतिबन्धकत्वगर्भनिरुक्तावनुयोगित्वत्वगर्भोक्ताविशि-
ष्टान्तराघटितत्वस्य निर्दोषत्वप्रसङ्गात् उक्तस्य विवक्षणीयबाधघटि-
ताश्रयासिद्ध्यव्याप्तिवारकस्वरूपसम्बन्धरूपावच्छेदकत्वपक्षीयप्रकार-
स्यांऽऽकरीत्या निर्दोषत्वाभावे परित्याज्यतया स्वरूपसम्बन्धरूपाव-
च्छेदकत्वेऽप्युक्ताश्रयासिद्धौ धूमव्यभिचारिवह्निपक्षकधूमसाध्यकवह्नि-
हेतुकस्थले व्यभिचारघटितबाधेऽव्याप्तिसम्भवेन तदुपपत्त्यर्थमन-
तिरिक्तवृत्तित्वप्रतिपादनपरतायां विशिष्टान्तरघटितत्वेनाघटितस्य
साध्यसाधनेत्यादिग्रन्थस्य वक्तुमशक्यत्वात् उक्ताश्रयासिद्ध्यव्याप्ति-
वारकस्वरूपसम्बन्धरूपावच्छेदकत्वपक्षीयप्रकारस्य निर्दोषत्वे व्यभि-
चारकालीनघटाघटितव्याप्तेरपि गोत्ववद्रूपबाधाव्याप्तिवारणायानुस-
रणीयेन प्रागुक्तान्यतमसम्बन्धघटितलक्षणेन वारणसम्भवात् अन-
तिरिक्तवृत्तित्वस्यानुसरणीयत्वस्यैव प्रसङ्गाच्चेति ।

नचैवं यद्विषयकनिश्चयस्येत्यादि तदसादित्यन्तस्य प्रसक्तानुप्र-
सक्तविचारोविशिष्य स्वित्थम्विचार्य्यते बाधत्वत्वादिरूपेण साजा-
त्यविवक्षणे तदपेक्षया लाघवात् विशिष्टान्तराघटितत्वघटितबाधत्व-
त्वाद्यन्यतमवद्रूपावच्छिन्नत्वमेव हेत्वाभासत्वमवक्तुमुचितं तत्कुतो-
नोक्तमिति तत्रोच्यते विशिष्टान्तराघटितत्वघटितान्यतमनिवेशे वि-
शिष्टान्तराघटितत्वपञ्चकस्य निविष्टतया तदपेक्षया विशिष्टान्तराघ
टितत्वाघटिततत्पञ्चकघटितविशिष्टान्तराघटितत्वघटितविशेष्यदल-
निवेश एवोचितोलाघवात् विशिष्टान्तराघटितत्वेन बाधत्वत्वाद्यन्यत-
मांशविनिर्मुक्तेन घटितस्य विशेष्यदलस्य बाधत्वत्वादिघटकैकविशि-
ष्टान्तराघटितत्वेन तुल्यत्वात् बाधत्वत्वांशस्योभयत्र तुल्यस्यैव प्र-
वेशात् बाधत्वत्वादिघटकविशिष्टान्तराघटितत्वचतुष्टयस्य तत्राधि-
क्यात् किञ्च विशेषगुणाभाववद्घटकालीनत्वेसति गुणसामान्याभा-
ववद्घटकालीनह्रदपक्षसाध्यहेतुकस्थले घटपक्षकगुणसामान्याभा-
वविशेषगुणाभावोभयसाध्यहेतुकस्थले चाश्रयासिद्ध्यादिघटिताश्रया-
सिद्ध्यादिबाधादिघटितबाधादव्याप्तिवारणायाश्रयासिद्धित्वत्वबाध-
त्वत्वादिघटकविशिष्टान्तराघटितत्वस्य निर्वक्तव्यतायास्तादवस्थ्य-
मेव तथासत्यपि अतएव विशिष्टान्तराघटितत्वघटितबाधत्वत्वाद्युप-
पादाने वक्ष्यमाणाया व्यभिचारघटितबाधाव्याप्तेर्वारणसम्भवाद्गौर-
वेपि तदवश्यमुपादेयं विशिष्टान्तराघटितत्वशरीरे इति तथाविधान्य-

नमवद्रूपावच्छिन्नत्वस्य हेत्वाभासलक्षणत्वे क गौरवमितिनिरस्तम् । विशिष्टान्तराघटितत्वघटितबाधत्वत्वाद्युपादानेऽप्युक्तदोषघटितदोषवारणस्य दुःशक्यतया भक्षितेपि लशुन इत्यादिन्यायेन तस्यानुपादेयत्वात् ।

तत्राऽव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्य रीत्यन्तरानुसरणे तद्रीतिमनुसृत्य सामान्यलक्षणोपपादनस्यैव लाघवेन कर्त्तुमुचितत्वात् साच रीतिः प्रतिबन्धकत्वगर्भनिरुक्तावेतेनेत्यादिना प्रागुक्ता प्रतिबन्धकत्वाघटिते च विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नेत्यादिना वक्ष्यते एवञ्च विशिष्टान्तराघटितत्वेनाघटितव्यभिचारत्वादिसत्वेनेत्यादिग्रन्थस्यापि सङ्गतिः । अन्यथा व्यभिचारघटितबाधाऽव्याप्तिवारणायैव विशिष्टान्तराघटितबाधत्वत्वादेः साक्षात्यघटकतयोपादेयत्वेन तदसङ्गतिः स्यादिति ।

केचित्तु स वक्ष्यमाणोग्रन्थः प्रतियोगिस्वत्वग्रन्थलक्षणाभिप्रायकः तस्यैवात्रानुसरणीयत्वस्य प्रागुक्तत्वात् प्रतियोगिस्वत्वघटितकल्पे च बाधत्वत्वादेर्विशिष्टान्तराघटितत्वघटितत्वे मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादेयत्वासम्भवादसम्भवप्रसङ्गादिति विशिष्टान्तराघटितत्वाघटितव्यभिचारत्वाद्युक्तिसङ्गतिरिति वदन्ति तच्चिन्त्यम् ॥

अनुयोगिस्वत्वघटितकल्पे स्वसजातीयविशिष्टान्तरभिन्नत्वस्य तादृशरूपानवच्छिन्नप्रकारतावच्छेदकत्वस्य यत्र घटविषयकं ज्ञानं नियमतोमेयत्वविशिष्टव्यभिचारविषयकमेव तत्र घटेऽतिव्याप्तिप्रसङ्गाद्धेयता अतएव प्रतियोगिस्वत्वघटितेपि तादृशस्वभिन्नत्वादेर्हेयत्वमवसेयम् ॥ ० ॥

घटादेस्तादृशधर्मेण सजातीयाप्रसिद्ध्यैवेति यद्यपि बाधत्वादिप्रत्येकशरीरेविरोधिविषयताप्रयुक्तत्वनिवेशापेक्षया लघुभूतविरोधिविषयताप्रयुक्तत्वघटितविशेष्यदलोपादानमेव कर्त्तुमुचितं बाधत्वादिशरीरे विरोधिविषयताप्रयुक्तत्वाप्रवेशे घटादेस्सजातीयविशिष्टन्तरप्रसिद्ध्या विशेष्यदले विरोधिविषयताप्रयुक्तत्वस्य तत्रातिव्याप्तिवारणाय सार्थक्यात् तथापि निर्वह्निः पर्वतोवह्निमानित्यादौ वह्निमत्पर्वते स्वसजातीयविशिष्टान्तरवह्न्यभावादिघटितत्ववारणाय बाधाश्रयासिद्धित्वादिशरीरे विरोधिविषयताप्रयुक्तत्वप्रवेश आवश्यक इति घटादीनां

तेन रूपेण सजातीयाप्रसिद्धिर्भवत्येव ।

स्वसजातीयविशिष्टान्तरघटितमिति। स्वजातीयविशिष्टान्तरविपरीतबाध-त्वकत्वेन बाधत्वस्य स्वपदग्राह्यतया लक्षणासम्भव इत्यतोऽघटितेति तदर्थश्च स्वजातीयविशिष्टान्तराविषयिताव्याप्यविषयिताकत्वं स्वाव-च्छिन्नविषयित्वाव्यापकविषयताशून्यस्वावच्छिन्नविषयिताशून्यप्रती-तिविषयतावच्छेदकस्वसजातीयधर्म्मकत्वरूपा ज्ञेयः ।

विशिष्टान्तराघटितत्वेनाघटितस्येति इदञ्च नचेत्यादिग्रन्थस्य स्वरूपस-म्बन्धरूपावच्छेदकत्वघटितप्रतियोगिस्वत्वगर्भलक्षणपरत्वे सङ्गच्छते, अन्यथा विशिष्टान्तराघटितत्वघटितव्यभिचारत्वादिसद्भावेपि सजा-तीयाप्रसिद्धिनिबन्धनतदतिप्रसङ्गवारणसम्भवात् विशिष्टान्तराघटित-त्वाघटितस्येत्युक्तेरसङ्गत्यापत्तेः व्यभिचारत्वादिशरीरे विशिष्टान्तरा-घटित्वाप्रवेशस्य प्राग्व्यवस्थापितत्वेनानतिरिक्तवृत्तित्ववदेतस्यापि सिद्धस्यैव प्रतिपादनं नह्यतिव्याप्तिवारकतयेति ग्रन्थविरोधाभावात नचेत्यादेरनुयोगिस्वत्वगर्भलक्षणपरत्वेपि न क्षतिरित्यपि कश्चित ॥

तत्सङ्ग्रहानुपपत्तेरिति । अथ व्यभिचारत्वं बाधादिव्यावृत्तं यत्तव्य-भिचारलक्षणे वक्ष्यति तदेव साजात्यघटकतया विवक्षणीयं तथाच न व्यभिचारत्वमादाय व्यभिचारघटितबाधेऽव्याप्तिरितिचेन्न प्रागु-क्तबाधघटितबाधाश्रयासिद्धिघटिताश्रयासिद्ध्याद्यव्याप्तेर्दुरुद्धरत्वात् अतएव स्ववृत्त्यन्यतमघटककिञ्चिद्धर्म्मपुरस्कारेण साजात्यम्वाच्यं तथाच धर्म्मविशिष्टधर्म्मत्वमेव विशिष्टान्तराघटितत्वमनुयोगिस्वत्व-गर्भलक्षणं पर्य्यवसितम् वैशिष्ट्यञ्च स्वतादात्म्यस्ववृत्तिबाधत्वत्वा-द्यन्यतमघटकधर्म्मवत्त्वोभयसम्बन्धेन धर्म्मवत्ताच स्वविशिष्टधर्म्मा-वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन स्ववैशिष्ट्यञ्च स्वाश्रयवत्त्वस्वाश्रयावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभ-यसम्बन्धेन एवञ्च व्यभिचारघटितबाधत्वविशिष्टत्वस्य व्यभिचारघटि-तबाधत्वे स्ववृत्त्यन्यतमघटकबाधत्ववत्त्ववत्त्वस्य सत्त्वेन सत्त्वात् न व्य-भिचारघटितबाधेऽव्याप्तिः नच व्यभिचारत्वमात्रस्यैव तादृशधर्म्मवत्त्व-या तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वविरहादसम्भव इति-वाच्यं स्वनिरूपितबाधत्वत्वाद्यन्यतमघटकवृत्तिसम्बन्धितावत्त्वस्यैव धर्म्मवैशिष्ट्यघटकसम्बन्धत्वात् सम्बन्धितावत्त्वञ्च स्वाश्रयवत्त्वस्व-निरूपकधर्म्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्ब-

न्धेन स्वविशिष्टधर्म्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन सम्बन्धिता च निरूपकभेदेन भिद्यत इति मेयत्वविशिष्टव्यभिचारत्वनिरूपितसम्बन्धिताविशिष्टत्वं व्यचिभारत्वे व्यभिचारत्वनिरूपितसम्बन्धिताविशिष्टत्वविपरीतव्यभिचारत्वे वर्त्तत इति नातिव्याप्तिरिति निरस्तम् ।

यत्तु प्रतियोगिस्वत्वगर्भलक्षणे कथञ्चिदप्युक्तरीतेर्न सम्भव इति तन्न धर्म्मविशिष्टान्यप्रतीतिविषयतावच्छेदकत्वस्यैव विशिष्टान्तराघटितस्वरूपताया वाच्यत्वात् तत्र च भेदप्रतियोगितावच्छेदकतानिरूपितस्वविशिष्टधर्म्मावच्छिन्नविषयतात्वनिष्ठसंसर्गताघटकस्वपदार्थनिष्ठावच्छेदकतानिरूपिततादात्म्यस्वविशिष्टधर्म्मघटितत्वोभयत्वावच्छिन्नसंसर्गतावच्छेदकताघटकस्वनिरूपितसम्बन्धितानिष्ठस्वाश्रयत्वाद्युभयसम्बन्धावच्छिन्ननिरूपकताकसम्बन्धित्वनिष्ठावच्छेदकताघटकस्वनिरूपितसम्बन्धित्वनिष्ठावच्छेदकताबाधत्वत्वाद्यन्यतमघटकवृत्तित्वस्वनिरूपितत्वोभयघटकपरिसमाप्तावच्छेदकताकत्वेन नोपादेया अपितु स्वनिरूपितत्वनिष्ठावच्छेदकतानिरूपितत्वविशेषितबाधत्वत्वाद्यन्यतमघटकधर्म्मत्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वेनैव तथाच स्वनिरूपितबाधत्वत्वनिष्ठसम्बन्धितात्वस्वरूपविशेषसम्बन्धघटितावच्छिन्नावच्छेदकताकप्रतियोगिताकविशेषभेदात्मकधर्म्मविशिष्टान्यत्वस्य व्यभिचारघटितबाधप्रतीतौ सत्त्वाल्लक्षणसङ्गतिः मेयत्वविशिष्टव्यभिचारादिप्रतीतौ न कस्यातथाविधविशेषभेदस्यापि सत्त्वमिति नातिप्रसङ्गस्य सम्भावनापीति ।

इदमत्रावधेयम् प्रकृतपक्षताविशिष्टविशेष्यताकग्रहत्वव्यापकप्रतिबध्यतावृत्त्युभयावृत्तिधर्म्मावच्छिन्नसम्बन्धितात्वेन तत्तत्प्रतिबध्यतानिष्ठतद्व्यक्तित्वावच्छिन्नसम्बन्धिता अनुगमय्यान्यतमकोटावाश्रयासिद्धित्वत्वस्थाने प्रवेशनीयाः स्ववैशिष्ट्यञ्च स्वावच्छेद्यविशेष्यतावच्छेदकधर्म्मावच्छिन्नत्वस्वावच्छेद्यविशेष्यतानिरूपितप्रकारतावच्छेदकधर्म्मावच्छिन्नप्रकारकत्वोभयसम्बन्धेन प्रकृतपक्षत्वावच्छेद्यविशेष्यताविशिष्टत्वमेव वा लाघवादुपादेयम् उभयावृत्तिधर्म्मावच्छिन्नसम्बन्धितावच्छेदकसम्बन्धश्चानुयोगिस्वत्वगर्भे स्वावच्छेदकीभूतधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वत्वभावीयपरम्परावच्छेदकत्वम् प्रतियोगिस्वत्वघटिते च स्वनिरूपितप्रतिब-

न्धकतावृत्त्यभावप्रतियोगितावच्छेदकत्वमेव आश्रयासिद्धिविपरीता-श्रयासिद्धिनिर्णययोरेकप्रतिबन्धकत्वाभावे तत्प्रतिबन्धकतानिरूपित-प्रतिबध्यतयोरपि भेदेनाश्रयासिद्धित्वस्य स्वसजातीयविशिष्टान्तर-तावच्छेदकधर्म्मप्रसिद्ध्यर्थमनुयोगिस्वत्वगर्भे प्रतिबन्धकतायाः स्वनि-रूपितत्वेनानुपादानम्, प्रतियोगिस्वत्वेच तथासत्यपि मेयत्वविशि-ष्टाश्रयासिद्धित्वस्य स्वजातीयविशिष्टान्तरतावच्छेदकघटितस्यास्त्ये-व प्रसिद्धिः एवमेव चान्यतमत्वशरीरे बाधत्वत्वादिस्थानेपि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वादिव्यापकप्रतिबध्यतावत्युभयावृ-त्तिधर्म्मावच्छिन्नसम्बन्धितात्वेनानुगमय्य तादृश्यः सम्बन्धिताः प्रवे-शनीयाः सम्बन्धितावच्छेदकसम्बन्धश्च प्रागुक्तबाधत्वत्वाद्यनुसारेणो-हनीयः तथाच प्रागुक्तानुगम आश्रयासिद्ध्यादिघटिताश्रयासिद्ध्यादा-वपि न दोषः। तथाहि गुणवद्घटत्वविशिष्टत्वस्य गुणवद्घटत्व इव विशेषगुणद्घटत्वविशिष्टत्वन्तत्रापि वर्त्तते एव स्वनिरूपिताया अन्य-तमत्वघटकविशेषगुणाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छि-न्नप्रतिबध्यतानिष्ठतद्व्यक्तित्वावच्छिन्नसम्बन्धितानिष्ठसम्बन्धिताव-त्तायाः सत्वात् स्वनिरूपकधर्म्मावच्छिन्नाविषयकप्रतीतिविषयताव-च्छेदके गुणवद्घटत्वे स्वाश्रयवत्त्वविरहात्तदुभयसम्बन्धेन स्वविशि-ष्टघटवृत्तिविशेषगुणत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व-स्य तत्र सम्भवादेवस्पतियोगिस्वत्वगर्भेपि लक्षणसङ्गतिरूह्येति।

इदन्त्वत्रतत्त्वं परिष्कारेण निर्द्दोषतायाः प्रायः सर्वत्रैव सम्भवेन सिद्धान्तप्रकारखण्डनीयप्रकारयोर्लाघवगौरवे एव परीक्षणीये अस्ति च एतेनेत्यादिनोक्तप्रतिबन्धकत्वगर्भनिरुक्तिपरिष्कारे प्रतिबन्धक-त्वाघटितनिरुक्तेर्विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नत्वघटि-तकल्पे च सिद्धान्तताप्रयोजकमितो लाघवमित्यस्यादोषत्वेऽपि न क्षतिः यद्यपि यथाश्रुतस्यापि स्वसजातीयविशिष्टान्तराघटितत्वस्य सिद्धान्तकल्पद्वयापेक्षयास्त्येव गुरुत्वं तथापि प्रतिबन्धकत्वागर्भासि-द्धान्तस्य प्रागुक्ततयैतस्योभयपक्षसधारण्येन सम्भावितस्य गुरोरपि प्रतिबन्धकत्वगर्भसिद्धान्तोत्तरं परोक्तत्वेन खण्डनायोद्भावनीयत्व-सम्भवत्येवोचितम् परैश्च हेत्वाभासविभाजकरूपेणैव साजात्यमुक्तन्त-न्नायुक्तं खण्डनमपीदश्चानुपदोक्तन्न परैरुक्तमित्युपक्रान्तदूषणगणा-स्पर्शित्वेपि तस्य सिद्धान्तकल्पापेक्षया‍ऽलघुत्वेन प्राप्तहेयभावस्य

न सन्दर्भ इति ॥

स्ववृत्तियावद्धेत्वाभासविभाजकरूपेणेति स्ववृत्तित्वविशेषितबाधत्वाद्यन्यतमघटकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वावच्छिन्नवत्त्वेन स्ववृत्तित्वविशिष्टतादृशघटकत्वनिरूपिताधेयत्वसम्बन्धावच्छिन्नव्यापकत्वेन चेत्यर्थः ॥

अथ धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमव्यभिचारित्वमादाय व्यभिचारघटितबाधेऽव्याप्तिवारणाय स्वसजातीयविशिष्टान्तरघटितं यत्स्वं तस्य स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्वावच्छिन्नविषयतावत्त्वोभयसम्बन्धावच्छिन्नाभाववत्प्रतीतिविषयतावच्छेदकत्वं विवक्षणीयं तथाच बाधविशिष्टत्वविशिष्टव्यभिचारत्वयोः स्वपदोपादेयत्वेपि तदवच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य बाधविशिष्टव्यभिचारप्रत्यये विरहात् बाधविशिष्टव्यभिचारत्वस्य च स्वपदेनोपादानासम्भवेन न मेयत्वविशिष्टतादृशव्यभिचारत्वस्योपादेयतया तदवच्छिन्नविषयतावत्त्वस्यापि च तत्रासत्त्वात्तत्प्रतीतेरुक्तधर्म्माभाववत्तया बाधविशिष्टव्यभिचारेऽतिप्रसङ्गप्रसङ्गान्नैवम्वक्तव्यमित्याह—

एवंसतिबाधविशिष्टव्यभिचारादावित्यादि अथ स्ववृत्तयो यावन्तो हेत्वाभासविभाजकतावच्छेदकीभूतधर्म्मास्तत्प्रत्येकवत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्म्मघटितं यत्स्वं निरुक्तोभयसम्बन्धावच्छिन्नतदभाववत्त्वस्विवक्षणीयम् तथासति बाधविशिष्टव्यभिचारत्वादेः स्वपदेनोपादानसम्भवान्नातिव्याप्तिसम्भवः नच निरुक्तोभयसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रवेशासम्भव इति वाच्यं तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यैव निवेश्यत्वात् वृत्त्यनियामकस्यात्र प्रतियोगितावच्छेदकसम्बन्धत्वस्यावश्यवाच्यत्वाच्च अन्यथा पक्षाननुयोगिकेन व्याधिकरणेन वृत्त्यनियामकसम्बन्धेन साध्यतास्थले बाधस्यासम्भवप्रसङ्गात् नचाननुगमप्रसङ्गः वस्तुविशिष्टवत्त्वभावस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वतादात्म्य स्ववृत्तिबाधत्वत्वाद्यन्यतमघटकत्वव्यापकत्वोभयसम्बन्धेन व्यापकताच स्वविशिष्टधर्म्मवृत्तित्वसम्बन्धेन वैशिष्ट्यं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन स्व-

विशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन वा बोध्यम् स्ववैशिष्ट्यञ्च तत्र स्वावच्छिन्नविषयताशून्यत्व स्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वोभयसम्बन्धेन वस्तुविशिष्टवस्त्वभावश्च प्रागुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकः संसर्गघटकतया व्यापकविषयताशून्यत्वस्य विशिष्टान्तररूपघटितत्वस्थानीयतया तस्यैवासम्भववारणमेव फलमितिचेन्न वाधघटितवाधाश्रयासिद्धिघटिताश्रयासिद्धाव्याप्तेर्दुरुद्धरत्वात् प्रागुक्तरीत्या पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतावृत्त्युभयावृत्तिधर्म्मावच्छिन्नवत्त्वस्यानुगतस्यान्यतमत्वकोटौ निवेशे प्रागुक्तरीत्याऽखिलदोषनिरासे गुरुतरैतत्प्रयासस्योन्मत्तकृत्यतापत्तेः स्वावच्छिन्नविषयित्वावच्छिन्नायावत्यः प्रतिबन्धकतास्तत्प्रत्येकमित्यादिना नचचतुष्टये समाशङ्कितपूर्वपक्षस्योत्तरतयोक्तायाःस्थलविशेषीयातिव्याप्तेरत्रापि दुरुद्धरत्वाच्चेत्यलम् ।

अथ यत्प्रतिबन्धकतानतिरिक्तवृत्ति द्रूपावच्छिन्नविषयता एवंभूतं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयतावच्छेदकधर्म्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं‧तदवच्छिन्नत्वं प्रतिबन्धकतावच्छेदकत्वगर्भनिरुक्तौ तद्घटितनिरुक्तौ तु यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोदत्तरानुमितिसामान्ये निरुक्तोभयाभावप्रयोजकयदभावाधिकरणता तदधिकरणता यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितावास्ति एवम्भूतं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नवत्त्वमेव वाच्यं व्यभिचारघटितबाधादौ यत्प्रतिबन्धकतात्वेन बाधप्रतिबन्धकतामुभयाभावप्रयोजकयदधिकरणतात्वेन पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताञ्चोपादाय लक्षणसमन्वयसम्भवात् बाधविशिष्टव्यभिचारादौ च बाधप्रतिबन्धकताया व्यभिचारप्रतिबन्धकताया यत्पदार्थतयोपादेयतया तत्तदवच्छेदकविषयतावच्छेदकाविशिष्टान्तरतावच्छेदकबाधत्वव्यभिचारत्वावच्छिन्नघटितत्वसत्त्वेनातिप्रसङ्गस्याप्यसम्भवाच्चेति तत्कुतोनोक्तं नच बाधविपरीतबाधविषयकनिश्चययोरेकरूपेण प्रतिबन्धकत्वाभावपक्षेऽसम्भव इति वाच्यं प्राथमिकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं विहाय स्वभिन्नत्वस्यैव वाच्यत्वाद्बाधत्वादेः स्वपदार्थत्वे तद्भिन्नत्वेन प्रसिद्धतथाविधमेयत्वाविशि‧

ष्टवाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तत्र सत्त्वेना-सम्भवविरहात् नच पूर्वमेव स्थलविशेषेऽव्याप्तिसम्भावनया स्वभि-न्नत्वान्निराकृतमिति वाच्यं तादृशस्थलविशेषे मानाभावादतएव जग-दीशतर्कालङ्कारैरेवमेवोक्तं अथवोक्तस्थलविशेषाव्याप्तिसम्भावनया-स्तु स्वभिन्नत्वस्यानुपादेयता तथापि यत्प्रतिवध्यतानिरूपितप्रतिब-न्धकत्वतत्प्रतिवध्यतावच्छेदकधर्म्मावच्छिन्नप्रतिवध्यतानिरूपितप्रति बन्धकत्वयोरुभयाभावप्रयोजकयदधिकरणत्वतन्निरूपकानिरूपिताधि-करणत्वयोश्च लक्षणे प्रवेश्यत्वेन नासम्भवप्रसङ्ग इति ।

यत्तु यत्तदर्थयोरननुगतत्वात् अनुगमस्य चासम्भवात् तथाहि प्रकृतानुमितित्वव्यापकप्रतिबन्धकताविशिष्टरूपावच्छिन्नत्वत्वेनैवानु-नुगमः कर्त्तव्यस्तत्र च स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परा-वच्छेदकत्वस्य विशेष्यदलकार्य्यकारिणस्सम्बन्धत्वसम्भवेपि विशि-ष्टान्तराघटितत्वकार्य्यकारिसम्बन्धस्यासम्भवात् स्ववृत्त्यभावीयप्र-तियोगितानिरूपितपरम्परावच्छेदकत्ववद्रूपाविशिष्टत्वस्य स्वावच्छि-न्नाविषयकप्रतीतिविषयतावच्छेदकत्वतत्सम्बन्धावच्छिन्नस्ववृत्तित्वो-भयसम्बन्धेनाभिमतस्य नह्यस्ति तादृशसंसर्गता मेयत्वविशिष्टव्य-भिचारत्वे तथाविधवाच्यत्वविशिष्टव्यभिचारत्वस्योभयसम्बन्धे-न सत्त्वादिति तन्न स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्प-रावच्छेदकतावद्रूपवदन्यत्वस्य संसर्गत्वसम्भवात् रूपवत्ताच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसम्बन्धावच्छिन्नस्व-वृत्तित्वस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धे-नेतिचेदेतत्प्रकारस्य निर्दोषत्वेपि स्वसजातीयाविशिष्टान्तराघटित-त्वपरिष्कारस्रूपत्वस्य पूर्वोक्तदूषितलक्षणचतुष्टयपरिष्कारस्रूपत्वस्य-च विरहेण ग्रन्थासङ्गत्यभावात् एतदपेक्षया लघुभूतस्य प्रतिबन्धक-त्वगर्भनिरुक्तौ निर्दोष प्रकारस्य प्रागुक्तत्वात् प्रतिबन्धकत्वाघटित-निरुक्तौ वक्ष्यमाणत्वाच्च प्रकारान्तराल्लघुभूतमिदमेव कुतोनोक्तमि-त्येवमाशङ्काया असम्भवाच्च ।

यच्च मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानं यत्र स्थलविशेषे नि-यमतोव्यावर्त्तकदर्शनभ्रमात्मकंव्यावर्त्तकधर्म्मविशिष्टविषयकमपि ज्ञा-नं तादृशव्यभिचारविषयकमेव तत्र व्यावर्त्तकधर्म्मदर्शनप्रतिबन्ध-कतामादायातिव्याप्तिः तद्वृत्त्यभावीयप्रतियोगितानिरूपितपरम्परा-

वच्छेदकतावत्त्वस्य मेयत्वविशिष्टव्यभिचारत्वे व्यावर्त्तकधर्मदर्शन विशिष्टपक्षत्व एव वा सम्भवेन तद्विशिष्टान्यत्वस्य मेयत्वविशिष्ट-व्यभिचारत्वे सम्भवात् एतेनेत्यादिकल्पेतु नैतस्य सम्भवः व्यभिचा-रप्रातबन्धकतावच्छेदकशुद्धव्यभिचारविषयित्वे निश्चयविशिष्टनि-श्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकव्यावर्त्तकधर्मविशिष्टविषयित्वे च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वासत्वादिति तत्प-रिचिन्तनीयम् यत्रच पदार्थान्तरविशिष्टसाध्याभाववत्पक्षविषयक-ज्ञानपदार्थान्तरविशिष्टहेत्वभाववत्पक्षविषयकज्ञानयोर्व्यभिचारभ्रमा-त्मकयोरेकरूपतैव नियता तत्र विशिष्टव्यभिचाराप्रसिद्ध्या तद्विषयि-त्वानवच्छिन्नव्यभिचारभ्रमप्रतिबन्धकतामादायातिव्याप्तिः सम्भाव्य-ते नह्येतेनकल्पे तत्र तु यत्र तत्सम्भावना प्रायस्तत्रात्र तत्संभावना भ-वत्येवेत्येतद्विशेषं मनसि निधाय भट्टाचार्य्येणैतेनेत्यादिकमेवोक्तमिति तु युक्तं संभावनाया दूषकत्वमनङ्गीकृत्यैतेनेत्यादिकल्पापेक्षया गुरो-रप्यस्य यथाश्रुतलक्षणानुसारितया झटित्युपस्थितत्वेन जगदीशेनै-तदेवोपन्यस्तमिति बोध्यम् ॥

मेयत्वविशिष्टव्यभिचारादाविति अत्रमेयत्वविशिष्टत्वं व्यभिचारविशेष-णत्वेनाभिमतं न तु व्यभिचारघटकतादृशवृत्तित्वविशेषणत्वेन केवल-साधनविशेषणत्वेन वा तथाविधविशिष्टयोः प्रतिबन्धकतावच्छेदक-विषयित्वानिरूपकवस्त्वघटितत्वात् मेयत्वविशिष्टव्यभिचारवान्वह्नि-र्व्यभिचारवान्मेयत्वविशिष्टोवह्निरितिज्ञानयोः प्रकारतावच्छेदकता-त्मकधर्मितावच्छेदकतात्मकमेयत्वविषयताघटितधर्म्माभ्यामेव प्रति-बन्धकत्वस्य वाच्यत्वात् अन्यथा तज्ज्ञानयोरेव प्रतिबन्धकताविघ-टकस्य इदं ज्ञानम्मेयत्वविशिष्टव्यभिचाराभाववति मेयत्वविशिष्टव्य-भिचारप्रकारताकमित्यप्रामाण्यज्ञानस्य व्यभिचाराभाववति मेयत्व-विशिष्टवह्नौ व्यभिचारप्रकारताकमित्यप्रामाण्यज्ञानस्य चोत्तेजक-ताया दुर्वचत्वादिति तयोर्लक्ष्यताया एव वक्तव्यत्वात् एवञ्च पर्वतो-वह्न्यभाववानित्यादौ वह्निमत्पर्वतस्यैव पर्वतीयवह्निशुक्लवह्निमत्पर्वता-देरपि बाधत्वमिष्टमेव ।

यदिचाप्रामाण्यज्ञानानां तत्तद्व्यक्तित्वेनाभावाः प्रतिबन्धकताव-च्छेदककोटौ निवेश्यन्ते तदा मेयत्वविषयतायाः प्रतिबन्धकतावच्छे-दकशरीरे प्रवेशस्यानावश्यकतयोक्तविशिष्टयोरपि लक्ष्यताविर-

हात्वयोरव्यतिव्याप्तिर्भवत्येव ॥ अतएव मेयत्वविशिष्टव्यभिचारित्वविशिष्टसाधने लक्ष्यत्वेनातिव्याप्त्यभावस्वदन्तीत्यन्तेनोक्त्वा तत्रास्वरससूचकन्तच्चिन्त्यमित्युक्तम् जगदीशेन ।

यत्तु यादृशविशिष्टघटककिञ्चित्पदार्थांशेऽप्रामाण्ये गृहीतेपि तज्ज्ञानस्य प्रतिबन्धकता नापहीयते तादृशविशिष्टस्यैवालक्ष्यत्वं मेयत्वाभाववति मेयत्वप्रकारकत्वरूपेऽप्रामाण्येगृहीतेपि मेयत्वविशिष्टव्यभिचारविशिष्टसाधनविषयकज्ञानस्य व्याप्तिबुद्धिप्रतिबन्धकत्वाक्षतेस्तद्विशिष्टस्याप्यलक्ष्यत्वमेवास्तीति तन्न तज्ज्ञानस्य मेयत्वविषयताघटितधर्म्मेण प्रतिबन्धकत्वे तादृशविशिष्टेऽतिव्याप्तेरुक्तेन वक्ष्यमाणेन च विशिष्टान्तराघटितत्वप्रकारेण वारणासम्भवादित्येतस्य ग्रन्थकर्त्तृसम्मतत्वाभावादिति ध्येयम् ॥

यद्यपि दोषत्वतदभावप्रयोजकतया दोषव्यवहारतदभावापेक्षया प्रतिबन्धकतानवच्छेदकाविषयितानिरूपकाघटितत्वतदभावयोरेव सुज्ञानत्वेन तादृशनिरूपकघटितत्वमेवेष्टापत्त्यभावप्रयोजकतयोपन्यस्तमुचितं तथापि प्रतिबन्धकतानुपयुक्तसामानाधिकरण्यांशघटितसत्प्रतिपक्षपाक्षिकदोषव्यवहारसन्दिग्धप्रयोजकभावन्तदुपेक्ष्यासन्दिग्धप्रयोजकताकं व्यवहारमेवेष्टापत्त्यभावप्रयोजकाभावप्रतियोगितया प्रदर्शयति ।

व्यवहाराभावादिति नचोक्तलक्षणस्योक्तविशेषणविशिष्टस्य सत्त्वासत्त्वनिर्णयाभ्यां दोषव्यवहारतदभावनिर्णयौ व्यवहारतदभावनिर्णयाभ्यामुक्तविशेषणघटितलक्षणत्वनिर्णयाधीनलक्षणसत्त्वासत्त्वनिर्णयावितीतरेतराश्रयप्रसङ्ग इति वाच्यम् अप्रतिहतविज्ञानानान्तान्त्रिकाणाव्यवहारस्य लक्षणज्ञानानपेक्षत्वेनात्मविशेषगुणभेदघटितासमवायिकारणलक्षणवदितरेतराश्रयविरहात् । तान्त्रिकव्यवहारविषयानुगमनफलस्य लक्षणस्य तद्व्यवहारमात्राधीनतया लक्षणग्रहाधीनत्वेपीदानीन्तनव्यवहारस्य क्षत्यभावादिति भावः ॥

इष्टापत्तौचव्यर्थम्विशेषणमिति नचात्र मेयत्वविशिष्टव्यभिचारस्य व्यभिचारात्मकतया प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वाश्रयत्वेन दोषरूपतायामिष्टापत्तिसम्भवेंपि व्यभिचारकालीनघटादेर्व्यभिचारानात्मकतया तथाविधर्मानाश्रयत्वेन तस्य दोषत्व इष्टापत्त्यसम्भवात् तद्विशेषणस्य वैयर्थ्याभिधानमसङ्गतमिति

शङ्क्यं वास्तवप्रयोजकप्राचीनव्यवहारव्याकुलीकरणमुखेनैवेष्टापत्तेर्वा-च्यतयापाततः प्रयोजकस्य प्रतिबन्धकतावच्छेदकाविषयितानिरूप-कत्वस्य शरीरेऽवच्छेदकत्वस्य पाषाणमयत्ववत्पर्वतादेर्दोषत्वापादक-त्वेन स्वरूपसम्बन्धरूपतामपहायानतिरिक्तवृत्तिरूपतया वक्तव्यत्वेन तद्घटितसद्भावस्योभयत्र साम्यात्तादृशानवच्छेदकविषयितानिरूप-काघटितत्वस्योभयत्र विरहेण तदनवलम्बनेनैवेष्टापत्तिप्रवृत्तेर्वक्तव्यत्वा-त् ॥ यद्वा मेयत्वविशिष्टव्यभिचारे दोषवारणायैव दीधितिकारस्य वि-शेषणोपादानं तत्रेष्टापत्तौ व्यर्थन्तदर्थन्तद्विशेषणं स्यादित्यलक्ष्यतया एव व्यवहारबलेन तदभिमततया विशेषणोपादानेपि दोषत्वप्रसङ्गरू-पोदोष इति नच वाच्यमित्यत्रैव तात्पर्य्यम् एतेनानतिरिक्तवृत्तिविष-यितानिरूपकतावच्छेदकस्य तादृशानच्छेदकविषयितानिरूपकाघटि-तधर्म्मस्य दोषत्वप्रयोजकत्वे तथाविधव्यभिचारत्वाश्रयत्वस्य मेय-त्वविशिष्टव्यभिचारे सत्त्वेन दोषत्वेपि व्यभिचारकालीनघटादौ तादृशधर्म्माभावेन न तत्र तत्सम्भव इति कुतोव्यर्थविशेषणतेति-निरस्तम् ।

अन्वयितावच्छेदकधर्म्मबोधकतायाइति अन्वयितावच्छेदकत्वञ्च तदादि-पदशक्यतावच्छेदकानुगमकबुद्धिविषयतावच्छेदकत्ववद् दोषपदश-क्यतावच्छेदकानुगमकमुपलक्षणमेवातो न दोषादिपदस्य नाना-र्थता नच व्यभिचारोदोष इत्यत्र व्यभिचारस्तादृशव्यभिचारत्वा-श्रय इत्यन्वयबोधस्य पर्य्यवसितत्वेनोदुद्देश्यतावच्छेदकविधेययोरैक्य-प्रसङ्गात्तदसम्भव इतिवाच्यम् विधेयांशेऽधिकावगाहिनः शाब्दबो-धस्य स्वीकारात् व्यभिचारत्वेन तथाविधेनाभिन्नस्य मेयत्वविशि-ष्टव्यभिचारत्वस्यान्वयितावच्छेदकतया दोषस्य दुर्वारत्वेन तथा-विधविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यवच्छेदकोक्तविशेषणवि-शिष्टान्वयितावच्छेदकतापर्य्याप्त्यवच्छेदकधर्म्मावच्छिन्नवत्त्वस्यैव दो-षत्वरूपतया वाच्यतया कथञ्चिदप्युद्देश्यतावच्छेदकविधेययोरैक्य-स्यात्राप्रसक्तेः ॥ यद्वाऽन्वयितावच्छेदकत्वन्न शक्यतावच्छेदकोपलक्षण-तया विवक्षितमपितु तद्धर्म्मविशिष्टे दोषादिपदार्थान्वये तद्धर्म्मेपि पदा-र्थतावच्छेदकीभूतोक्तविशेषणविशिष्टतादृशविषयितानिरूपकतावच्छे-दकधर्म्मस्य व्युत्पत्तिवैचित्र्यात्तादात्म्येनान्वयाभ्युपगमेन तथाविधाध-र्म्मोन्वयितावच्छेदकरूप एव भवतीत्येतावदर्थमेवोपन्यस्तं तथाच त-

तद्धर्म्माणाञ्च तदादिपदशक्यतावच्छेदकघटत्वपटत्वादिवत्प्रातिस्विकरूपेण शाब्दबोधे प्रवेश इति विधेयांशेऽधिकावगाहिशाब्दबुद्धेर्विशेष्यसमानांशप्रवेशवैफल्यप्रसङ्गादनुपगमपक्षेपि न प्रकृते काचिदनुपपत्तिरिति ॥

यद्यपि मेयत्वविशिष्टव्यभिचारे दोषवारणायोपन्यस्तविशेषणे साध्याभाववद्वृत्तिसाधनस्य साधनावृत्तित्वेन तादृशसाधनकत्वस्यैव व्यभिचारतया वाच्यत्वेन तत्रैव दोषोद्भावनमुचितं तथापि साधननिष्ठसाध्याभाववद्वृत्तित्वस्य हेतुनिष्ठतया तन्मात्रस्य व्यभिचाररूपतोपगमेनापि निरुक्तविशेषणदोषप्रसक्तर्निरुद्धप्रसरतया प्रक्रान्तोपस्थितिलाघवप्रयुक्तोक्ताशङ्कनस्य व्यभिचारस्थले विरोधस्याप्येवमेव प्रतिबन्धकतानुपयुक्तभागाघटितस्य दोषस्य सम्भावितया विरोधेपि प्रक्रान्ताव्यवधानघटितसम्बन्धमूलकज्ञटित्युपस्थितिनिबन्धनदोषाशङ्कनस्य चासम्भवेन यथाकथञ्चिन्निमित्तप्राप्तसत्प्रतिपक्षदोषाशङ्कापेक्षया दोषादिव्यवहारमूलीभूतन्यायविषयप्राथम्यवत्पक्षादिसम्बन्धिदोषप्रधानाशङ्कैवार्हत्यौचितीमित्याशयेनाश्रयासिद्ध्याद्यव्याप्तिशङ्कावारकतयोपात्तदीधितिग्रन्थमाश्रयासिद्ध्याद्यव्याप्तिमाशङ्क्यावतारयति नन्वाश्रयासिद्ध्याद्येति ॥

अनियन्त्रितविषयताके प्रत्यक्षे तुल्यवित्तिवेद्यतयोभयोर्भानसम्भवेपि नियन्त्रितविषयताकानुमित्यादौ तथाविधभानस्यानुभविकमित्यतः कल्पान्तरमाह असमानविशेष्यकस्यापीति ।

इदमापाततस्तदभावतदभावव्याप्यान्यतराविषयकस्येति तु युक्तं कथमन्यथा पक्षविशेष्यकपक्षतावच्छेदकप्रकारकज्ञानासमानविशेष्यकस्याप्याधेयतया पक्षविशिष्टपक्षतावच्छेदकाभावनिर्णयस्य मणिमन्त्रादिन्यायेन नोक्तप्रतिबन्धकत्वम् ।

तादृशधर्मस्याप्रसिद्धएवेतिनतथाव्यवहारइति अथ पर्वते धूमेन वह्निसाधने धूमो न दुष्ट इतिव्यवहारानुपपत्तिः प्रकृतपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्म्मावच्छिन्नसम्बन्धिभेदस्य व्यवहर्त्तव्यस्याप्रसिद्धेरितिचेन्न आकाङ्क्षावैचित्र्यात्तत्रा दुषधात्वर्थप्रतिबन्धकतायामेव प्रकृतानुमितिनिरूपितत्वाभावस्यैव बोधनीयत्वात् । नचैवं ह्रदे धूमेन वह्निसाधने धूमो न दुष्ट इति व्यवहारापत्तिः यत्किञ्चित्प्रतिबन्धकत्वे प्रकृतानुमितिनिरूपितत्वा-

भावस्य सत्त्वात्तत्प्रतिबन्धकतासामान्ये प्रकृतानुमितिनिरूपितत्वाभावस्यासम्भवभयेन विवक्षितुमशक्यत्वादितिवाच्यम् किञ्चिद्रूपावच्छिन्नविषयिताव्यापकप्रतिबन्धकतात्वव्यापकस्वरूपविशेषेण नञर्थान्वयेऽसम्भवविरहेण तस्यैव विवक्षिततया आपत्तिविरहात् स्वनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्म्मावच्छिन्नवत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकप्रकृतानुमितित्वव्यापकप्रतिबन्धत्वाभावादेरपि व्युत्पत्तिवैचित्र्येण बोधस्य वाङ्गीकारादिति ।

प्रकृतहेतुतावच्छेदकाविशिष्टसम्बन्ध इति स्वज्ञानाविषयप्रकृतहेतुतावच्छेदकावत्त्वरूपसम्बन्ध इत्यर्थः नच वह्निमान् द्रव्यादित्यत्र वह्निसाधनं द्रव्यन्दुष्टमिति वद्धूमो दुष्ट इत्यपि स्यात् व्यभिचारस्य स्वज्ञानविषयधूमत्वे हेतुतावच्छेदकद्रव्यत्ववत्त्वसम्बन्धेन धूमेपि सत्त्वादिति वाच्यमित्यवयितावच्छेदकाभिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धस्यैव व्युत्पत्तिवैचित्र्याभिष्टया बाधनात् स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्तायाः प्रकृतहेतुतावच्छेदकावच्छेदेनैव सत्त्वस्य वाङ्गीकारात् नचैवमपि यत्र प्रमेयवतोहेतुत्वं तत्र घटोदुष्ट इत्यादयो यत्र महानसीयधूमोहेतुस्तत्र धूमोदुष्टइति यत्र धूमोहेतुस्तत्र महानसीयधूमोदुष्ट इत्यादयश्च व्यवहारादुर्वारा एवेतिवाच्यम् अन्वयितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकावच्छिन्नप्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मस्यैव निष्ठार्थसम्बन्धघटकत्वात् अथैवं काञ्चनमयधूमस्य हेतुतास्थले दुष्टत्वव्यवहारानुपपत्तिः काञ्चनमयत्वधूमत्वगतद्वित्वावच्छिन्नवत्त्वस्याप्रसिद्धेः एवं महानसीयधूमहेतुकस्थले धूमोदुष्टइतिवत् काञ्चनमयधूमहेतुकस्थलेपि धूमोदुष्टइत्यस्यानिष्टताया एवाङ्गीकरणीयतया काञ्चनमयधूमोदुष्टइत्यस्य तथाविधधूमाप्रसिद्ध्या भ्रान्तैकसम्बन्धितयाचाभ्रान्तानान्तत्र दुष्टत्वव्यवहारानुपपत्तिः वह्निनाधूमसाधने साधनत्वेनाभिमतोदुष्टइति व्यवहारानुपपत्तिश्च अन्वयितावच्छेदकसाधनतावच्छेदकयोर्भेदादितिचेन्न प्रकृतान्वयिताविशिष्टप्रकृतसाधनताविशिष्टावच्छेदकतापर्य्याप्त्यवच्छेदकरूपस्य संसर्गघटकत्वाङ्गीकारात् वैशिष्ट्यञ्च प्राथमिकं स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मपर्य्याप्तावच्छेदकताकत्वेन द्वितीयञ्च स्वसमानाधिकरणवृत्तित्व स्वनिरूपितत्वोभयसम्बन्धेन एवञ्च संसर्गघटकीभूतोधर्म्मोधूमत्वगतैकत्वमेवेति

न दोषवत्त्वाप्रसिद्धिः केवलधूमत्वेनान्वयितायां हेतुत्वे तद्वैशिष्ट्यास-म्भवेन धूमोदुष्ट इत्यस्य न प्रसङ्गः धूमे काञ्चनमयत्वाभावग्रहकाल इच्छया जायमानत्वेनाहार्य्यतया दुष्टत्वांशेऽप्रमतया च काञ्चन-मयत्वांशे भ्रमात्मकस्यापि प्रमासमशीलतया तद्व्यवहारस्याभ्रान्तव्य-वहारतोविशेषाभावेन न व्यवहारानुपपत्तिः अतएव द्रव्यादिहेतुक-स्थले धूमोदुष्ट इतिव्यवहारमन्वयितावच्छेदकधर्मावच्छेदेन तादृशा-र्मघटितसम्बन्धेन दोषवत्वस्यैव दुष्टत्वव्यवहारप्रयोजकत्वाङ्गीका-द्वारयतो हेतुताविशिष्टावच्छेदकतापर्य्याप्त्यवच्छेदकरूपविशि-ष्टस्य संसर्गत्वे दोषवत्तायाः प्रसिद्धिसम्भवेपि काञ्चनमयधूमो-ष्टवत्थ्यानुपपत्तिः धूमोदुष्टइत्यस्यापत्तिर्दुर्वारा। नच यत्राशेषस्य दुष्टत्वरदकस्य हेतुवृत्तित्वन्तत्रैवैकधर्म्मस्पारित्यज्य न दुष्टत्व-हेतुतावच्छत्र तु भवत्येव व्युत्पत्तिवैचित्र्यादिति वाच्यमीदृग्-व्यासभदस्यानुभविकत्वेनानभ्युपेयत्वादित्यन्यत्रानवकाशम् नच प्रकृतान्वयित्वादिघटितरूपेण संसर्गत्वस्यासम्भवितया ज्ञानविशेष-विषयितापन्नधर्म्मविशेषभावेनैव तत्वस्य वाच्यत्वेन धूमोदुष्टइतिव्यव हारप्रसङ्गोदुर्वार एवेतिवाच्यम्। प्रकृतान्वयित्वस्य संसर्गाघटकत्वेपि प्रकृतहेतुत्वस्य तथात्वसम्भवेन तत्तद्धर्मस्यान्वयितावच्छेदकतास्थ ले तत्तद्धर्म्ममात्रावच्छिन्नप्रकृतहेतुत्वघटितस्यैव संसर्गत्वाभ्युपगमप-र्य्यवसानेनोक्तातिप्रसङ्गासम्भवात् अनुपस्थितस्यापि संसर्गघटकत्वे न प्रकृतान्वयित्वस्यापि तथात्वसम्भवाच्च।

वस्तुतस्तु हेतुताविशिष्टावच्छेदकतापर्य्याप्त्यवच्छेदकत्वोपल-क्षितधर्म्मघटितसंसर्गेण यद्धर्म्मविशिष्टे दोषवत्ता भासते स्वज्ञानवि षयप्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदक-त्वोपलक्षितधर्म्मपर्य्याप्तिसम्बन्धेन तद्धर्म्मेपि दोषवत्ताभानस्याङ्गीका-राद् धूमत्वमात्रं धर्म्मितावच्छेदकीकृत्य न तथाव्यवहारः अन्वयि-तावच्छेदकीभूतधर्म्मेऽन्वयितावच्छेदकतापर्य्याप्त्यवच्छेदकधर्म्माव-च्छेद्यपर्य्याप्तेरेव संसर्गत्वेन काञ्चनमयत्वधूमत्वगतद्वित्वपर्य्याप्तेर्धूम त्वगतैकत्वानवच्छेद्यतया धूमत्वस्य तादृशद्वित्वपर्य्याप्त्यधिकरण-त्वेपि न क्षतिः साधनत्वेनाभिमतोदुष्टइतिव्यवहारश्च व्युत्पत्तिभेदम-ङ्गीकृत्योपपादनीयः।

केचित्तु साधनाप्रसिद्धिस्थले काञ्चनमयत्वधूमत्वाभ्यां साधनत्वे-

नाभिमतोदुष्टइत्यादय एव व्यवहाराः तेषामेवाभ्रान्तपुरुषीयत्वान्न
तु काञ्चनमयधूमोदुष्टइत्यादयः काञ्चनमयत्वधूमत्वाभ्यान्धूमोदुष्टइति·
व्यवहारस्य प्रामाण्यञ्च साधनत्वेनाभिमतइत्येतदभ्युपगमद्वारेणैव सम्पाद·
नीयम्। अन्यथा तृतीयान्तार्थस्य तदुभयवैशिष्टयस्य धर्मिण्येवा·
न्वयेन प्रामाण्यस्यासम्भवात् द्रव्यहेतुकस्थले द्रव्यत्वेन धूमोदुष्टो
नतु धूमत्वेनेतिव्यवहारस्य प्रमाणिकत्वे स्वज्ञानविषयरूपप्रकृतहेतुता
वच्छेदकवत्स्वरूपसम्बन्धघटितदुष्टत्वस्याव्याप्यवृत्तित्वे द्रव्यत्वाव·
च्छेदेन दुष्टत्वस्य धूमत्वावच्छेदेन तदभावस्य च धूमेऽवगाहितया
तदुपपादनीयम् अन्यथा दुष्टत्वे द्रव्यत्वावच्छेद्यत्वस्य धूमत्वावच्छे·
द्यत्वाभावस्य चावगाहितयैव तत् धूमोदुष्टइतिव्यवहारश्च धूमत्वे
दुष्टत्वावच्छेदकत्वमवगाहमानोऽप्रमाणमेवान्यथा तु प्रमाणमित्यव·
धेयम् ॥

यत्किञ्चिद्विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशेन तत्सङ्ग्रहस·
म्भवादिति अथ तादृशरूपानवच्छिन्नत्वं स्वविषयतानिष्ठायामुभयाभा·
वप्रयोजकाभावाधिकरणतानिरूपितप्रयोजकतायामेव निवेशयितुं
युक्तं प्रयोजकतानिरूपितप्रयोज्यत्वस्य द्विधानिवेशाभावेन लाघवात्
प्रमेयत्वविशिष्टव्यभिचारविषयतानिष्ठायाः प्रयोजकतायास्तादृशव्य·
भिचारविषयतात्वावच्छिन्नत्वेनातिप्रसङ्गवारणसम्भवात् व्यभिचार·
घटितबाधविषयतानिष्ठा च प्रयोजकता न निरूप्यनिरूपकभावानापन्न·
व्यभिचारघटकपदार्थविषयतात्वेन तादृशेनावच्छिन्नेत्यव्याप्तिविरहा·
च्चेतिचेन्न यत्र वह्न्यंशे मेयत्वविशिष्टधूमाभाववद्वृत्तित्वस्याभावाभा·
वस्य चैकत्र द्वयमितिरीत्यावगाहिज्ञानं तत्रोभयाभावप्रयोजिकाया हे·
तौ साध्याभाववद्वृत्तित्वाभावरूपव्याप्तिवैशिष्ट्यावगाहित्वाभावाधि
करणतायाः स्वविषयतानिष्ठप्रयोजकत्वं द्वयम्, एकं निरूप्यनिरूपक-
भावापन्नव्यभिचारघटकपदार्थविषयतात्वावच्छिन्नं परमभावत्वाव·
च्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नविषयतानिरूपिताभावत्वावच्छि
न्नस्वरूपसम्बन्धावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयता·
त्वावच्छिन्नमस्तीतिद्वितीयस्योक्तरूपानवच्छिन्नत्वसम्भवेन मेयत्व·
विशिष्टव्यभिचार एवातिव्याप्तेस्तादवस्थ्यात् अभावाभावांशे भ्रमत्वे
नाभावाभाववद्वह्नित्वस्याप्रसिद्धत्वेन विशिष्टान्तरत्वासम्भवाद्विशिष्टा·
न्तरव्यभिचारत्वावच्छिन्नविषयतात्वव्यापकत्वस्य केवलव्यभिचाराव·

गाहिज्ञानविषयतायां व्यभिचारेण द्वितीयरूपेऽसम्भवात् नच सा प्र-
योजकता न स्वविषयतानिष्ठेतिवाच्यं विशिष्टविषयतायाः प्रमीयवि-
शेष्यत्वानतिरेकेण वह्न्यंशे व्यभिचारप्रमात्मकतज्ज्ञानीयवह्निविशेष्य-
त्वस्य विशिष्टविषयतात्वसम्भवात्तस्यैव चाभावविषयतानिरूपिताभा
वविषयतानिरूपितानिरूपितत्वात् एकत्रद्वयमितिरीत्याज्ञाने विशेष्य-
त्वस्यैकत्वात् नच स्वविषयतात्वावच्छिन्नप्रयोजकतायामवोक्तरूपा-
नवच्छिन्नत्वान्निवेश्यमितिनोक्तदोषइतिवाच्यं भ्रमप्रमासाधारणविषय-
तायाः प्रयोजकत्वेन विशिष्टविषयतात्वेन प्रयोजकत्वस्य वक्तुमश-
क्यतयाऽसम्भवापत्तेः नच स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोज-
कत्वमेव स्वविषयताप्रयोजकतापदेन विवक्षणीयम् आवश्यकञ्चैत-
त् अन्यथा धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यत्र बाधघटकत
या धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयताप्रयोज्यायां पक्षेसाध्यवै-
शिष्ट्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयतात्वव्याप-
करूपावच्छिन्नाप्रयोज्यत्वेन धूमव्यभिचारिवह्निमत्यतिव्याप्तेरितिवा-
च्यं यत्र मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानमुक्तैकत्र द्वयरीत्या भ्रमा-
त्मकमेव व्यभिचारज्ञानञ्जातादृशमपि तत्रातिव्याप्तेस्तथाप्यवारणात्
अभावत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपि-
तवह्नित्वावच्छिन्नविषयतात्वस्य मेयत्वविशिष्टव्यभिचारविषयतात्व-
व्यापकत्वात् नच विशिष्टान्तरत्वं विषयतात्वविशेषणमेवेतिवाच्यं
तत्त्वं हि स्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावृत्तित्वरूपमेव
तत्त्वस्य स्वावच्छिन्नाविषयताशून्यभ्रमविषयतावृत्तित्वेन निरूप्यनि-
रूपकभावापन्नबाधादिघटकपदार्थविषयतात्वे सत्त्वेनासम्भवापत्तेः।

एतेन स्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावृत्तिरूपावच्छि-
न्नाप्रयोज्यत्वमेव कुतो न निवेशितमित्यपि निरस्तम् स्वावच्छिन्नवि-
षयताशून्यत्वं स्वावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नाभावरूपमे-
वेत्यपि न वाच्यं मेयत्वविशिष्टव्यभिचारत्वस्य स्वपदार्थत्वे व्यभिचार-
प्रतीतेरप्यतथात्वापातात् नापि स्वावच्छिन्नावच्छेदकताकप्रतियोगि-
ताकभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छे-
दकरूपवृत्त्यन्यत्वं तत् वृत्तित्वञ्च स्वविषयतावच्छेदकतात्वावच्छि-
न्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेतिवाच्यं बाधत्वादेः स्वप-
दार्थत्वे मेयत्वविशिष्टबाधादिप्रतीतेस्तथात्वापातात् नच रूपवृत्तित्वश-

रीरे न्यूनवारकपर्य्याप्तिर्न्निवेशनीयेतिवाच्यं निरुक्तरूपस्य वह्नित्वतदा-श्रयसाधारण्येन वह्निवादिना घटाद्यवगाहिनो बाधभ्रमस्योक्तरूपवृत्त्यन्यत्वसम्भवेनासम्भवापत्तेः नच स्वावच्छिन्नविषयतानिरूपितविशेष्यत्वानवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यन्यत्वं वाच्यं वृत्तित्वञ्च न स्वविषयतानिरूपितविशेष्यत्वावच्छिन्नावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथासति वह्नित्वाभावत्वह्रदत्वगतसमुदायत्वे भ्रमस्यापि वृत्तित्वेनासम्भवासम्भवादितिवाच्यं कालीनस्वविशेषितह्रदपक्षके संयोगेन वह्नित्वविशिष्टसाध्यके संयोगेन वह्नित्वहेतुके बाधज्ञानस्य स्वरूपासिद्धिज्ञानस्य च बाधकालीनस्वरूपासिद्धित्वावच्छिन्नविषयताविशेषनिरूपितविशेष्यत्वानवच्छिन्नावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकरूप वह्नित्वत्वाभावत्वह्रदत्वकालीनत्वस्वरूपत्वसंयोगसम्बन्धावच्छिन्नप्रतियोगितात्वगतसमुदायत्वे वृत्तित्वेन बाधकालीनस्वरूपासिद्धावतिव्याप्तिप्रसङ्गात् न च यद्यद्रूपावच्छिन्नविषयित्वं स्वावच्छिन्नविषयित्वव्यापकं तावद्रूपावच्छिन्नविषयताशून्यं तदितिवाच्यं गौरवात् नचैवंसति तावद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयतावृत्तिरूपावच्छिन्नाप्रयोज्यत्वस्य तादृशरूपानवच्छिन्नत्वस्य वा निवेशे दोषाभावेन ग्रन्थोक्तव्यापकत्वगर्भनिरुक्तेर्नविशेष इति वाच्यं व्यापकत्वमात्रांशे साम्येपि कूटत्वस्यातिगुरुशरीरस्याधिकस्य प्रवेशेन गौरवात् यत्र बाधप्रमा नियमेन नियतैकपदार्थविषयकसमूहालम्बनात्मिका भ्रमश्च न तथा तत्राव्याप्त्यापत्तेर्बाधभ्रमस्योक्तशून्यत्वववत्वात् ।

वस्तुतो यद्यद्रूपमध्ये विशिष्टरूपस्यापि धारणसम्भवेन तद्रूपावच्छिन्नविषयताशून्यत्वस्य भ्रमे सम्भवेनासम्भवस्य दुर्वारत्वात् न च यद्रूपावच्छिन्नविषयताशून्यप्रतीतौ भ्रमान्यत्वविशेषणं वाच्यमिति वाच्यं प्रागुक्तैकत्रद्वयमितिरीत्या भ्रममादायोद्भवितव्यदोषस्य दुरुद्धरत्वादित्यलमुदक्षरविचारपल्लवेन अखण्डाभावघटकतया सार्थक्यकरणमृजुगतिपरिशीलितं यद्युक्तगतिर्नस्यात्तस्यादेव शोभनम् ॥ अवच्छिन्नत्वस्यावच्छेद्यभेदभिन्नत्वात् निरुक्ताधिकरणतानिष्ठप्रयोज्यतानिरूपितप्रयोजकत्वनिष्ठत्वेनैवोपादेयतयाऽनवच्छिन्नत्वकल्प एव गौरवमितिवचनं बालवचनमेव अवच्छिन्नत्ववत्प्रयोज्यत्वस्यापि भिन्नमूर्त्तिकत्वेनोक्ताधिकरणतानिष्ठस्यैवोपादे-

यत्वेन साम्यात् नच ममोक्ताधिकरणतानिष्ठत्वं विशेषणं तव तूक्ताधिकरणतानिष्ठप्रयोज्यतानिरूपितप्रयोजकतानिष्ठत्वं विशेषणमिति गौरवमितिवाच्यं निरुक्तावच्छेद्यत्वस्य विभिन्नरूपत्वद्युक्तावच्छेद्यतात्वस्यानुगतस्वपदार्थघटितत्वेनानुगतस्यैवाभावप्रतियोगितावच्छेदकत्वेनोपादेयत्वात् उक्तविशेषणोपादाने प्रयोजनाभावात् अन्यथोक्तविशेषणोपादानेपि गत्यभावादुक्ताधिकरणतानामत्यन्ताननुगतरूपत्वात् अधिकरणतात्वादिविशेषेण तदनुगमने अवच्छेद्यतात्वविशेषेण तदनुगमनेपि क्षत्यभावादभावकूटनिवेशे तु सुतरामेव तन्निवेशे न प्रयोजनमिति ॥

इति सर्वतन्त्रस्वतन्त्रपण्डितकुलपतिधर्मदत्तशर्म (बच्चाझा) विरचितः सामान्यनिरुक्ति गूढार्थतत्त्वालोकः समाप्तः ।

---

मुद्रक—
जयकृष्णदासगुप्ता—
विद्याविलासप्रेस, बनारस सिटी ।

# शुद्धिपत्रम् ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | ६ | त्वस्य | त्वस |
| ११ | १८ | साधक | साध्यक |
| ११ | २४ | जाप्र | न्नप्र |
| ११ | ३० | त्वाद्भे | त्वाद्धे |
| १२ | १३ | यद्रू | तद्रू |
| १२ | १८ | ष्यत्वान | ष्यान |
| १२ | २१ | दोषस | दोषास |
| १३ | ११ | रूपिक | रूपक |
| १३ | २४ | विधेप्यभ्यासत्व | विधेयभ्यात्यत्व |
| १३ | २४ | येग | योग |
| १३ | २७ | कारण्य | करण्य |
| १४ | ७ | पक्षविशेष्यक | पक्षविशेषणक |
| १४ | ९ | पक्षामा | षक्षमा |
| १४ | १० | क्षया | क्षाया |
| १४ | १३ | नन | नंन |
| १४ | १६ | पर्वत | पर्वते |
| १४ | २० | मादावपि | मादायापि |
| १४ | २८ | दपाद | पाद |
| १४ | ३२९ | समाय | समवाय |
| १५ | ३ | निरूपितभा | निरूपितत्वाभा |
| १५ | ७ | सत्त्वाभावाद्दो | सत्त्वाद्दो |
| १५ | १४ | पक्षविषय | पक्षविशेष्यकभ्रमविषय |
| १५ | १५ | त्वमिवा | त्वमिति वा |
| १५ | १६ | न्यय | न्वय |
| १५ | १८ | पर्वततत्वेन | पर्वतत्वेन |
| १५ | २९ | देव | देरेव |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २० | ३ | परिःष्कृ | परिष्कृ |
| २१ | ३ | तन्निरूपक | तन्निरूपितनिरूपक |
| २१ | २८ | प्राणाण्य | प्रामाण्य |
| २२ | १९ | रूपणो | रूपेणो |
| २२ | २५ | रिचे | रितिचे |
| २७ | १५ | तयां | तया |
| २८ | १० | तत्कल्पेति | एतत्कल्पेऽपि |
| २८ | ३१ | दत्वनि | दनि |
| २९ | १५ | न्नत्व | न्नत्वं |
| ३० | ९ | काली | कालीन |
| ३१ | २५ | भावत | भावस्यत |
| ३२ | २७ | वह्नित्वाभावत्व | वह्नित्वाभावाभावत्व |
| ३३ | २२ | प्रातिस्वीक | प्रातिस्विक |
| ३३ | २९ | प्रातिस्वीक | प्रातिस्विक |
| ३४ | २० | ताकाभावा | ताकाअभावा |
| ३६ | ३० | स्वविषयि | स्वावच्छिन्नविषयि |
| ३९ | २० | तज्ज्ञानन्न | तद्व्यक्तिन्न |
| ४० | २१ | न्यतरमेव | न्यतरवत्वमेव |
| ४९ | १९ | साध्यतत्ता | साध्यवत्ता |
| ५३ | २९ | ततृय | तत्रितय |
| ५६ | १९ | याव | यत्वाव |
| ५७ | २४ | नचस्रा | नचावा |
| ५९ | २२ | भ्रमे त | भ्रमे तत्र त |
| ५९ | २६ | परस्पर वि | परस्पर स्वावच्छिन्न वि |
| ६१ | १८ | नासम्भव | नासम्भवसम्भव |
| ६४ | २० | स्याभावात् | स्याप्यभावात् |
| ६४ | २३ | तवैवं | तवैव |
| ६५ | १५ | जलवद्ध्रदो | जलवद्घटे ह्रदो |
| ६५ | २१ | पपदन | पपादन |
| ६६ | २२ | विशिष्टा | विशिष्टाभावा |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६९ | ६ | करवे | कवरवे |
| ६९ | ९ | विषय | विषयक |
| ६९ | ११ | विषय | विषयक |
| ६९ | १३ | जनक | जक |
| ७० | ११ | संसर्गा | संसर्गत्वा |
| ७४ | १५ | गिकत्व | गिक |
| ७४ | १६ | गत्वका | गित्वका |
| ७४ | २१ | तद्धदेवि | तद्धदवि |
| ७७ | ५ | यतयासा | यस्य सा |
| ७७ | ७ | भाववत्का | भाववदभाववत्का |
| ७७ | ८ | त्वेन | त्वेनैव |
| ७७ | १४ | वद्वद | वद्धद |
| ७७ | १९ | देकयोर्यत्पदाथत्व | दकयोर्यत्पदार्थत्व |
| ७७ | २७ | ज्ञानाञ्नि | ज्ञानंनि |
| ७७ | २७ | पक्षकवि | पक्षवि |
| ७८ | १ | वृत्तिनि | वृत्तित्वनि |
| ७८ | २३ | परिःकारे | परिष्कारे |
| ७९ | ३ | बन्वक्तयो | बन्धकयो |
| ८० | १९ | नाद्य | ताद्वयद्य |
| ८२ | २९ | परिःकृत | परिष्कृत |
| ८२ | ३१ | यत्त | यत्तु |
| ८५ | २ | तद्रू | तत्तद्रू |
| ८७ | २ | कायामभा | कायाअभा |
| ८८ | ३१ | दिका | दिकेति |
| ९० | २ | तं तत्रतत्र | तं नतत्र |
| ९० | ४ | तस्य व्य | तस्य तस्य व्य |
| ९० | १३ | वृत्तिघ | वृत्तित्वघ |
| ९० | १९ | ध्येयत्यस्य | ध्येयत्वस्य |
| ९१ | १७ | क्रियते | क्रियेत |
| ९४ | ५ | निवेदस्य | निवेश्य |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९५ | १६ | ष्टया | ष्टद्धया |
| ९६ | १० | केत्वान्यनमसम्बन्धने | कत्वान्यतमसम्बन्धेन |
| ९६ | १७ | कतया | कताया |
| १०१ | ११ | वान्ववाह्निव्याप्यधूमश्चे | वान्वह्यभाववांश्चे |
| १०३ | ११ | दितिति वा | दितिवा |
| १०३ | १६ | वव्यादि | वव्याप्यादि |
| १०४ | २४ | तृतया | त्रितया |
| १०४ | २४ | मिन्यनुव्य | मित्यव्य |
| १०५ | ३ | विषयिता | विषयता |
| १०५ | १३ | लक्ष्यत्वापाव् | लक्ष्यत्वापातात् |
| १०५ | ३१ | दोषोः | दोषाः |
| ११४ | २ | कघटक | कगत |
| ११४ | २५ | वृत्तिक | वृत्तित्वक |
| ११५ | ६ | विराहत् | विरहात् |
| ११५ | ९ | प्रोक्पिरिःक्त | प्राक्परिष्क |
| ११५ | १४ | चारप्रतिबन्धकतासा | चारविषयतासा |
| ११५ | १७ | त्वस्याश्र | त्वस्वाश्र |
| ११५ | २२ | विषयसा | विषयत्वसा |
| ११५ | २७ | वत्वस्याता | वत्वस्य ता |
| ११६ | ९ | त्वावद | त्ववद |
| ११६ | १६ | विश्चय | निश्चय |
| ११६ | ३० | तत्वस्व | तस्व |
| ११७ | ३ | स्वस्वनिरूपितस्व | स्वस्वरूपिस्व |
| ११८ | ४ | तत्यत्र | तेत्यत्र |
| ११८ | १० | न्नासम्भवः | न्नासम्भवसम्भवः |
| ११८ | ११ | व्याप्पक | व्यापक |
| ११९ | ३० | स्वशिष्ट | स्वविशिष्ट |
| १२० | ७ | जवद् | जलवद् |
| १२० | १० | तत्तृत | तत्रित |
| १२० | १९ | स्ग स | स्य वा स |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२१ | १५ | ह्रदोमा | ह्रदोवह्निमा |
| १२१ | १९ | प्रतिवध्यताव | विषयताव |
| १२४ | १ | स्तिः ए | स्तैः ए |
| १२४ | ६ | विषयतावच्छेदकः | विषयितानिरूपकतावच्छेदक |
| १२९ | १५ | त्वादुक्त | त्वदुक्त |
| १३१ | ४ | गितायाः | गिताघटितायाः |
| १३१ | ५ | द्रव्यत्वाव्या | द्रव्यत्वव्या |
| २३१ | १८ | मेयत्ववद्घटे | मेयत्ववद्विशेषगुणवद्घटे |
| १२१ | २१ | गुरुत्वात् ज | गुरुत्वाज |
| १३३ | ७ | वैलक्ष्यं | वैलक्षण्यम् |
| १३७ | ३ | विषयत्वा | विषयित्वा |
| १३७ | १४ | वृत्तिरूपता | वृत्तित्वरूपता |
| १३७ | २१ | दोषस | दोषज्ञानस |
| १३८ | २७ | यत्रव | यत्रैवा |
| १३९ | ४ | तैवेति | तैवमेवेति |
| १४१ | १० | नुशर | नुसर |
| १४३ | ८ | साध्व | साध्य |
| १४३ | १७ | श्रयसिद्धि | श्रयासिद्धि |
| १४५ | २३ | भाववह्न्यभाव | भाववद्वह्न्यभाव |
| १४६ | ६ | बन्धकता | वध्यता |
| १४६ | १८ | वद्द्रव्ये | वतादृशद्रव्ये |
| १४७ | १७ | द्वयोः | द्वयोः |
| १४८ | २ | यादि | त्यादि |
| १४९ | १२ | वाण | वारण |
| १४९ | १५ | वारण | वारणरूप |
| ४५२ | ३१ | क्ष्वाभाव | ह्वाभाव |
| १५३ | १ | पकत्व | पकनाकत्व |
| १५५ | १७ | स्वरूपकसम्ब | स्वरूपस |
| १५७ | ४ | वाधत्वो | वाधत्वत्वो |
| १५७ | २३ | कताव | कतानव |

| | | | |
|---|---|---|---|
| पृ० | प० | अशुद्धम् | शुद्धम् |
| १५७ | २८ | भ्रमबाध | बाधभ्रम |
| १५८ | १ | रिवा | रितिवा |
| १५८ | ६ | श्वव्याव्य | श्वव्याप्य |
| १५९ | ७ | रघाटित | राघटित |
| १५९ | २२ | ष्टस्य | ष्टयस्य |
| १५९ | २७ | दवव्या | दावव्या |
| १५९ | २८ | घटित्वस्य | घटितत्वस्य |
| १६० | ७ | तत्वात् | त्वात् |
| १६० | ११ | घटिवा | घटितत्वघटितवा |
| १६० | २७ | ष्टन्तर | ष्टान्तर |
| १६१ | १२ | घाटित्वा | घटितत्वा |
| १६२ | ८ | रूपताया | रूपतया |
| १६३ | ३१ | पेक्षक्षया | पेक्षया |
| १६४ | १ | संदर्भइति | सन्दर्भविरोधइ |
| १६४ | ३ | तमघ | तमत्वघ |
| १६४ | २५ | व्याधि | व्यधि |
| १६४ | २९ | वैशिष्ट्यं | वैशिष्ट्यञ्च |
| १६४ | १३ | द्रूपा | यद्रूपा |
| १६४ | १७ | तोक्त | तोत्ते |
| १६६ | १३ | करि | कारि |
| १६६ | २१ | ताव | तानव |
| १६६ | ३७ | अस | अप्यस |
| १६९ | ४ | वृत्तिरू | वृत्तित्वरू |
| १६९ | ६ | घटित्व | घटितत्व |
| १६९ | २८ | तद्धर्मेपि | तत्तद्धर्मेपि |
| १७० | ९ | र्क्तानि | क्तोनि |
| १७१ | १३ | वियप्र | विषयप्र |
| १७१ | १८ | कावच्छिन्न | काभिन्न |

इति शुद्धिपत्रम् ।

८२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितछन्दःसंग्रहयुक्तकम्। [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। २ से ५ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

८५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

८६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमोभागः। [ काव्यविभाग १३ ] रु० ०—८

८७ नागानन्दनाटकम्। श्रीहर्षदेवप्रणीतम्। काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम्। [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम्। महाकवि श्रीकालीदास विरचितम्। मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायणशास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम्। [ काव्य०४ ] रु०—८

८९ जागदीशीव्यधिकरणम्। न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम्। ( न्यायविभागे २ ) रु० २—८

९० काव्यकल्पलतावृत्तिः। श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता। ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका। श्रीरामाश्रमप्रणीता। श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता। पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता। (व्या० वि० ११) पूर्वार्द्धम्। रु० २—८ उत्तरार्द्धं। रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम्। साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्। (पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम्। श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम्। ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः। श्रीजगदीशतर्कालङ्कारकृताः। न्यायाचार्य श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः। ( न्याय वि० १३) रु० १—४

९५ (१) संस्कारदीपकः। म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः। गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः। (कर्म० वि० ८)रु० २-०

९५ (२) संस्कारदीपकः। " " " विवाह-गर्भाधानादिकेशान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः। ,, रु० ३-०

९५ (३) संस्कारदीपकः। " तुलादानादि-मृत्युशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः। ,, रु० ३-०

९६ वर्षकृत्यदीपकः। कालनिर्णयव्रतोद्यापन सहितः। म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः। (कर्म्म० वि ९) रु० ३-

९७ श्रौतसूत्रम्। श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम्। (कर्म० वि० १०) रु० २-

९८ नलचम्पूः अथवा दमयन्तीकथा। महाकविश्रीत्रिविक्रमभट्टविरचिता। विषमपद-प्रकाशाख्यव्याख्यया सहिता। भावबोधिनी टिप्पणी सहिता। (का० वि०१९) रु० १—

९९ श्रीब्रह्मसूत्रम्। श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभाख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम्। (श्रीनिम्बार्कभाष्यम्) (वेदान्त वि० १०) रु० ३—

१०० वाग्वल्लभः। सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छन्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्त्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः। (छन्दः शास्त्र वि० ४) रु० २—

१०१ सिद्धान्तलक्षणम्। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम्। (न्याय विभागे ४)) रु० १—

१०२ वेदभाष्यभूमिकासंग्रहः। (सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः)। [वेद० वि० ९] रु० २—

१०३ माधवीयधातुवृत्तिः। श्रीमत्सायणाचार्यविरचिता। (व्या० वि० १२) रु० ९—

१०४ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्। [कर्म०वि० ११] रु० ४—

१०५ ताण्ड्यमहाब्राह्मणम्। सायणाचार्यविरचितभाष्यसहितम्। (प्रथमोभागः) (वेद वि० ६) रु० ९—

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [न्या० वि० १९] रु० ३—

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। (तन्त्रशा० वि० १) रु० ९—

१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। (वेद० वि० ७) रु० २—

१०९ शब्दशक्तिप्रकाशिका। श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता। श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रि-कृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता। (न्या वि० १६) रु० ४—

११० योगदर्शनम् (पातञ्जलदर्शनम्) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रवि-रचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्योति-तम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्य-दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, एतदीयसंशोधनसम्पादन-कर्माकृतं च। (योगशास्त्रविभागे ३) रु० ९—

---